ऋद्धेषु स्फीतेषु महाधनेषु
प्रभूतनारीनरसंकुलेषु ।।९ ।।
मधु कृतं सत्पुरुषप्रशस्तं
सर्वेहि पुष्पेहि सुखावहाय ।
यं किंचिदर्थो मनसा च प्रार्थितः
सर्वो च ऋद्धयेय यथामनो च ।।१० ।।
सर्वार्थं संगम्य उपेथ निर्वृतिं
ससर्वसंस्कारकिलेशसूदनां ।
संवर्णये लोकहितो महाप्रभुः
सपुत्रदारा सहज्ञातिबान्धवा ।।११ ।।

ते दानि लेच्छवयो भगवन्तमाहन्सुः। अयमस्माकं भगवनुद्यानानां महा-उद्यानं यदिदं महावनं सकूटागारशाल । तं च भगवतो सश्रावकसंघस्य देम निर्यातेम। भगवां दानि भिक्षूनामन्त्रेसि। तेन हि भिक्षवो अनुजानामि आरामार्थं विहारार्थं कल्पार्थं। भगवा दानि महावनातो चापालं चेतिय आगतः। लेच्छ-(३००)वयो पृच्छन्ति। कहिं भगवां। भिक्षवो आहन्सुः। एष वासिष्ठाहो भगवां महावनातो येन चापालं चेतियं तेनोपसंक्रान्तो दिवाविहाराय। ते दानि

---

স্ফীত বা উন্নত, মহাধনবিশিষ্ট ও বহুসংখ্যক নর-নারীসংকুল আঢ্য (ধনীজনের) কুলে জন্মগ্রহণ করে॥ ৯॥

সব পুষ্প হইতে (মানুষের) সুখের জন্য যে মধু প্রস্তুত করা হয় তাহা সৎপুরুষকর্তৃক প্রশংসিত হয়। (তিনি) মনে মনে যে-কোন বস্তুই প্রার্থনা করুন, তাহা সবই তিনি যেমন মনে করেন তেমনই ঋদ্ধিসহকারে পাইয়া থাকেন॥ ১০॥

সব (প্রার্থিত) অর্থ বা বিষয় লাভ করিয়া তোমরা সেই নির্বৃতি বা নির্বাণের পথ প্রাপ্ত হও—যাহাতে সর্বপ্রকার সংস্কার ও ক্লেশ উচ্ছিন্ন বা নষ্ট হয়। লোক-হিতকারী মহাপ্রভু (বুদ্ধদেব) পুত্র-দার সহ ও জ্ঞাতি-বান্ধব সহ (তোমাদের) সকলের প্রশংসা করিবেন॥ ১১॥

তখন সেই লেচ্ছবিগণ ভগবানকে বলিল—"হে ভগবন্, আমাদের সব উদ্যানের মধ্যে মহা-উদ্যান হইল এই (দৃশ্যমান) কূটাগার ও শালাবহুল 'মহাবন'-নামক (উদ্যান)। আমরা ইহা শ্রাবকসংঘসহিত ভগবানকে (আপনাকে) দান করিতেছি, উপহার দিতেছি।" তখন ভগবান্ ভিক্ষুদিগকে আমন্ত্রণ করিলেন (তাঁহাদের প্রতি ভাষণ দিলেন)—"এই উদ্যান তোমাদের আবাস, বিহার ও আচারবিধি-সম্পাদনের (বা বিশ্রামের) জন্য ব্যবহারার্থ অনুমোদন করিলাম।" তাহার পর ভগবান্ 'মহাবন' হইতে চাপাল চৈত্যে উপস্থিত হইলেন। (৩০০) লেচ্ছবিরা জিজ্ঞাসা করিল—"কোথায় ভগবান্ গেলেন?" ভিক্ষুরা উত্তর করিলেন—"হে বাসিষ্ঠগণ, এই ভগবান্ মহাবন হইতে

लेच्छवयो आहन्सु । देम भगवतो चापाल चेतिय सश्रावकसघस्य निर्यातेम। अपरकाले लेच्छविका महावनमागता भगवतो पादवन्दका भगवा च कृतभक्तकृत्यो सप्ताम्रचेतिय गतो दिवाविहाराय। लेच्छवयो भिक्षूणा पृच्छन्ति। आर्या कहिं भगवान्। भिक्षू आहन्सु। एष वासिष्ठाहो भगवा कृतभक्तकृत्यो येन सप्ताम्रचेतिय तेनुपसक्रान्तो दिवाविहाराय। ते दानि लेच्छवयो येन सप्ताम्रचेतिय तेनुपसक्रमित्वा भगवत पादौ शिरसा वन्दित्वा भगवन्तमेतदवोचत्। देम भगव सप्ताम्रचेतिय भगवतो सश्रावकसघस्य निर्यातेम। एव बहुपुत्रचेतिय गौतमक चेतिय कपिनह्य चेतिय। भूयो चापि भगवान् कृत्यभक्तकृत्यो महावनातो येन मर्कटह्रदतीर चेतिय तेनुपसक्रान्तो दिवाविहाराय। लेच्छवयो आगता महावन भगवतो पादवन्दका। भिक्षूणा पृच्छन्ति। आर्या कहिं भगवान्। भिक्षू आहन्सु। एष वासिष्ठाहो भगवा कृतभक्तकृत्यो येन मर्कटह्रदतीर तेनुपसक्रान्तो दिवाविहाराय। ते दानि येन मर्कटह्रदतीर चेतिय तेनुपसक्रमित्वा भगवत पादौ शिरसा वन्दित्वा भगवन्तमेतदुवाच। देम मर्कटह्रदतीर चेतिय भगवत सश्रावकसघस्य निर्यातेम। आम्रपालीये भगवत

---

চাপাল চৈত্যের দিকে গেলেন—সেখানে দিবাভাগে বিহারার্থ (অর্থাৎ দিবসটা কাটাইবার জন্য) গেলেন।" তখন সেই লেচ্ছবিগণ বলিল—"আমরা সশ্রাবকসংঘ ভগবানকে চাপাল চৈত্য প্রদান করিলাম ও উপহার দিলাম।

অপর এক সময়ে লেচ্ছবিগণ ভগবানের পাদ বন্দনা করিবার অভিপ্রায়ে মহাবনে উপস্থিত হইল—(কিন্তু তখন) ভগবান আহার সমাপন করিয়া দিবাবিহারার্থ সপ্তাম্র চৈত্যে চলিয়া গিয়াছেন। লেচ্ছবিরা ভিক্ষুদিগকে জিজ্ঞাসা করিল—"আর্যগণ ভগবান্ কোথায় গিয়াছেন?" ভিক্ষুরা বলিলেন—হে বাসিষ্ঠগণ ভগবান ভক্তকৃত্য (আহার) সমাপন করিয়া সপ্তাম্রচৈত্যের দিকে দিবাবিহারার্থ উপসংক্রান্ত হইয়াছেন। তখন সেই লিচ্ছবিরা সপ্তাম্রচৈত্যের দিকে অগ্রসর হইয়া শীর্ষ দিয়া ভগবানের পাদ বন্দনা করিয়া ভগবানকে এই কথা বলিলেন—"হে ভগবন আমরা সশ্রাবকসংঘ ভগবানকে সপ্তাম্র চৈত্য প্রদান করিলাম—উপহার দিলাম। এইভাবে বহুপুত্র-চৈত্য গৌতমক চৈত্য ও কপিনহ্য চৈত্য (ভগবানকে প্রদত্ত ও উপহৃত হইল)।

অন্য এক সময়ে আবার আহারান্তে ভগবান দিবাবিহারার্থ মর্কটহ্রদতীর-নামক চৈত্যের দিকে অগ্রসর হইলেন। লেচ্ছবিরা ভগবানের পাদ বন্দনা করিবার জন্য মহাবনে উপস্থিত হইল। (তাহারা) ভিক্ষুদিগকে জিজ্ঞাসা করিল—"হে আর্যগণ ভগবান কোথায় গিয়াছেন?" ভিক্ষুরা বলিলেন—"হে বাসিষ্ঠগণ ভোজনান্তে ভগবান্ যে দিকে মর্কটহ্রদতীর সে দিকে দিবাবিহারার্থ গিয়াছেন।" তখন তাহারা মর্কটহ্রদতীর-নামক চৈত্যের দিকে উপসংক্রান্ত হইয়া শীর্ষদ্বারা ভগবানের পাদ বন্দনা করিয়া ভগবানকে এই কথা বলিল—"আমরা সশ্রাবকসংঘ ভগবানকে মর্কটহ্রদতীর চৈত্য প্রদান

सश्रावकसंघस्य भक्तं कृत्वा आम्रवनं निर्यातितं। बालिकाये भगवतः सश्रावकसंघस्य भक्तं कृत्वा बालिकाछवी निर्यातिता।

इति श्रीमहावस्तुअवदाने छत्रवस्तु समाप्तं।

अथ अपरिमितयशधर्मराज्ञो
नवविधशासनधर्मकोशरक्षो।
(३०१) भवतु गणवरो चिरस्थितिको
शिरिप्रवरो अचलो यथा सुमेरु॥१।

बुद्धानामनुत्पादे प्रत्येकबुद्धा लोके उत्पद्यन्ति। तुष्णीकशोभना महानुभावा एकचरा खड्गविषाणकल्पा एकमात्मानं दमेन्ति परिनिर्वायन्ति। अपरो दानि प्रत्येकबुद्धो काशिभूमिषु पूर्वाह्णे ग्रामं पिण्डाय प्रविशति प्रासादिकेन अभिक्रान्तप्रतिक्रान्तेन आलोकितविलोकितेन संमिञ्जितप्रसारितेन संघाटीपात्रचीवर-

---

করিলাম—উপহার দিলাম।" সশ্রাবকসংঘ ভগবানকে ভোজন করাইয়া আম্রপালী (তাঁহাকে) 'আম্রবন' উপহার দিলেন। সশ্রাবকসংঘ ভগবানকে ভোজন করাইয়া বালিকা 'বালিকাছবী' উপহার দিলেন।

ইতি মহাবস্তু-অবদানে ছত্রবস্তু সমাপ্ত।

যিনি অপরিমিত-কীর্তি ধর্মরাজ, যিনি নববিধ-শাসন-সমন্বিত (নয় প্রকার বৌদ্ধধর্মগ্রন্থবিভাগযুক্ত) ধর্মকোশের রক্ষক (৩০১) সেই গণবর (গণ বা সংঘের প্রধান শাস্তা বুদ্ধদেব), মহতী শ্রীসমন্বিত ('গিরিপ্রবর' পাঠ সঙ্গততর) সুমেরু পর্বতের ন্যায় চিরস্থিতিক হউন (অর্থাৎ চিরকাল স্থিতিলাভ করুন)॥ ১॥

মালিনী-বস্তু (মালিনীর উপাখ্যান)

বুদ্ধদিগের আবির্ভাবের সঙ্গে সঙ্গে (অথবা বুদ্ধদিগের আবির্ভাব যখন হয় না তখন?) প্রত্যেক-বুদ্ধগণ (অর্থাৎ যাঁহারা নিজেই বোধি লাভ করিয়াছেন ও যাঁহারা শাস্তা হয়েন নাই) পৃথিবীতে জন্মগ্রহণ করিয়া থাকেন। (তাঁহারা) মৌনাবলম্বনেই শোভন হয়েন; তাঁহারা মহান্ প্রভাববিশিষ্ট, তাঁহারা গণ্ডারের মত একাকী বিচরণ করেন; তাঁহারা কেবল নিজকেই দমিত করেন এবং পরিনির্বাণ লাভ করেন। ইদানীং কাশিভূমিতে কোন একটি প্রত্যেকবুদ্ধ পিণ্ডার্থ (অর্থাৎ আহার্য পিণ্ড লাভ করিবার উদ্দেশ্যে) পূর্বাহ্ণে এক গ্রামে প্রবেশ করেন—(লক্ষ্য করিলেই অনুমিত হইতে পারিত যে,) তিনি অভিক্রমণে ও প্রতিক্রমণে (অগ্রগমনে ও প্রত্যাবর্তনে), অগ্রে অবলোকনে ও পশ্চাৎ বিলোকনে, (হস্তের) সঙ্কোচনে ও প্রসারণে, সংঘাটী (বা উপরিতন বস্ত্রাবরণ), পাত্র ও চীবরের ধারণে অত্যন্ত প্রাসাদিক বা রমণীয় ছিলেন এবং

धारणेन नागो विय कारितकारणो अन्तर्गतेहि इन्द्रियेहि अवहिर्गतेन मानसेन स्थितेन धर्मताप्राप्तेन युगमात्र प्रेक्षमाण । ग्रामिको च ग्रामतो अरण्य निर्धावति कर्मान्त प्रत्यवेक्षणाये प्रासादिको अभिप्रसन्नदेवमनुष्यो। प्रत्येकबुद्धो त ग्राम सावदान पिण्डाय चरित्वा यथाधौतेन पात्रेण तत ग्रामातो निर्धावति। प्रायोन्नकालो वर्तति न च केनचिद् भिक्षा दिन्ना। ग्रामिको कर्मन्ता प्रत्यवेक्षयित्वा पुनर्ग्राम प्रविशति पश्यति च न प्रत्येकबुद्ध ग्रामतो निर्धावन्त। तस्य भवति। प्रायोन्नकालो वर्तति। जानामि ताव किं इमेन प्रव्रजितेन भैक्ष लब्धमिति। ग्रामिक प्रत्येकबुद्धमुपसक्रम्य पृच्छति। आर्य लब्ध भैक्ष ति। प्रत्येकबुद्धो तुष्णीकशोभनो तुच्छक पात्र ग्रामिकस्य दर्शयति। ग्रामिको प्रत्येकबुद्धस्य तुच्छक पात्र दृष्ट्वा तमाह्। यावदसविभागशीलो जनो यत्र नाम एवरूपो दक्षिणीयो एव महन्तातो ग्रामातो यथाधौतेन पात्रेण निर्धावति। इमे किं उद्दीपय परिभुजन्ति। सो आह। भगव आगच्छ अह ते आहार दास्यामि।

---

নাগ বা হস্তীর ন্যায় তিনি কৃতকৃত্য ছিলেন ও তাঁহার ইন্দ্রিয়সমূহ অন্তর্গত ছিল, তাঁহার মন অবহির্গত ছিল—তিনি ধর্মতাপ্রাপ্ত হইয়াছিলেন এবং কেবল এক যুগ (বা চতুর্হস্ত পরিমিত ভূমি) পর্যন্ত তাঁহার দৃষ্টি প্রসারিত ছিল (অর্থাৎ তিনি অনেকদূর পর্যন্ত চক্ষু প্রসারিত করিতেন না)। গ্রামিক (বা গ্রামাধ্যক্ষ) কর্মান্ত (বা কর্মস্থান, কারখানা) প্রত্যবেক্ষণ করিবার জন্য গ্রাম হইতে তাড়াতাড়ি অরণ্যে চলিয়া গিয়াছেন—তিনি প্রাসাদিক (কমনীয়চরিত) ছিলেন এবং দেব ও মনুষ্যের প্রতি অভিপ্রসন্ন বা শান্তভাবাপন্ন ছিলেন। তিনি সেই গ্রামে পিণ্ডার্থ অবদান বা কীর্তিবহুল ক্রিয়া সম্পন্ন করিতে করিতে বিচরণ করিয়া (কিছুমাত্র ভিক্ষা না পাইয়া) পূর্বের ন্যায় ধৌত (অর্থাৎ খাদ্যচিহ্নবিহীন) পাত্র লইয়া গ্রাম হইতে দ্রুত বাহির হইয়া গেলেন। প্রাহ্নকাল (পূর্বাহ্ণ) কাল চলিতেছে অথচ কেহ (তাঁহাকে) কোন ভিক্ষা দিল না। গ্রামিক কর্মান্তসমূহ প্রত্যবেক্ষণ করিয়া পুনর্বার গ্রামে প্রবেশ করিলেন এবং দেখিলেন যে সেই প্রত্যেকবুদ্ধটি গ্রাম হইতে দ্রুত নির্গত হইয়া যাইতেছেন। তাঁহার মনে এই ভাব উদিত হইল —"এখন পূর্বাহ্ণকাল। আমি এখন জানিতে চাই এই প্রব্রজিত কি ভৈক্ষ্য (ভিক্ষাদ্রব্য) লাভ করিয়াছেন।" গ্রামিক প্রত্যেকবুদ্ধটির নিকটে যাইয়া জিজ্ঞাসা করিলেন—"আর্য, কিছু ভৈক্ষ্য লাভ করিয়াছেন কি?" তূষ্ণীক থাকায় শোভমান সেই প্রত্যেকবুদ্ধটি তাঁহার তুচ্ছক (ভিক্ষাশূন্য) পাত্রটি দেখাইলেন। গ্রামিক প্রত্যেকবুদ্ধের রিক্ত পাত্র দেখিয়া তাঁহাকে বলিলেন—"এখানকার লোকেরা এত অসংবিভাগশীল (অর্থাৎ নিজ দ্রব্য ভাগ করিয়া অন্যকে দেয় না) যে এখানে এইপ্রকার দক্ষিণার্হ (দ্রব্যলাভের উপযুক্ত) ব্যক্তি এইরূপ মহান গ্রাম হইতে যথাধৌত (রিক্ত) পাত্র হস্তে লইয়া দ্রুত বাহির হইয়া যাইতেছেন। ইহারা কি (অর্থ?) উদ্দীপিত করিয়া (নিজেরাই সব) পরিভোগ করিতেছে।" তিনি বলিলেন—"ভগবন, আসুন আমি আপনাকে আহার দিব।"

सो तं प्रत्येकबुद्धं गृहीत्वा तं ग्रामं प्रविष्टो। सो चतुःमहापथे स्थित्वा अविधाविधाति क्रन्दति। अवस्थितग्रामिकस्य अविधाविधन्ति शब्दं श्रुत्वा सस्त्रीमनुष्यो ग्रामो सन्निपतितः। ग्रामिकस्य (३०२) उपसंक्रमित्वा पृच्छन्ति। किं क्षेमं किं अविधाविधं ति क्रन्दसि। ग्रामिक आह। क्रन्दामि येनैते न संविभागरता न संविभागशीलाः यत्र नाम एवं महन्तातो ग्रामातो एको भिक्षु यथाधौतेन पात्रेण निर्धावति। ते दानि ग्रामे महल्लका तस्य ग्रामिकस्य श्रुत्वा तं प्रत्येकबुद्धं सत्कर्तव्यं मन्येन्सु। ग्रामिकेन प्रत्येकबुद्धं गृहं प्रवेशेत्वा आहारेण प्रतिमानेत्वा यावज्जीवमुपनिमन्त्रितो। अहमार्यस्य निमन्त्रेमि यावज्जीवं सर्वसुखोपधानेन। स्वयधीता सवेदिता। एवन्तुवं आर्यं तं दिवसमाहारेण उपस्थिहिसि। दारिका प्रीता तुष्टा सवृत्ता। शोभन मे कल्याणं कर्म सेवितं। सा दानि त प्रत्येकबुद्धं दिवसमाहारेण उपस्थिहति प्रासादिकाभिप्रसन्नदेवमनुष्या। प्रत्येकबुद्धो परिज्ञातभोजनो सर्वाशुचिपरिक्षीणो महाभागो। तस्य दानि ग्रामिकस्य धीतुः तां प्रत्येकबुद्धस्य ईर्या पश्यित्वा उदार पसादं जात। तथा अन्ये पि

---

তিনি সেই প্রত্যেকবুদ্ধকেই সঙ্গে লইয়া গ্রামে প্রবেশ করিলেন। তিনি চতুর্মহাপথে দাঁড়াইয়া 'অবিধা, অবিধা' বলিয়া (অর্থাৎ বিপৎ উপস্থিত—সকলে সাহায্য কর) ক্রন্দন করিতে লাগিলেন। স্ত্রী-পুরুষ সহ সমস্ত গ্রাম (গ্রামস্থ লোকেরা) 'অবিধা! অবিধা'! শব্দ শুনিয়া তথায় অবস্থিত গ্রামিকের নিকট আসিয়া একত্রিত হইল। গ্রামিকের নিকট (৩০২) উপসংক্রান্ত হইয়া তাহারা জিজ্ঞাসা করিল—"কি অক্ষেম ('কিমক্ষেমং' পাঠ হবে কি? অথবা, 'কি খেমং' পাঠ হইবে=কিং খলু ইমং) উপস্থিত হইল যে আপনি 'অবিধা! অবিধা'! উচ্চারণ করিয়া ক্রন্দন করিতেছেন। গ্রামিক বলিলেন—"আমি ক্রন্দন করিতেছি এই লক্ষ্য করিয়া যে, এই (গ্রামবাসী) লোকেরা সংবিভাগরতও নহে, সংবিভাগশীলও নহে—যেখানে এই প্রকার মহান্ গ্রাম হইতে একটি ভিক্ষু যথাধৌত (শূন্য) পাত্র লইয়া দ্রুত চলিয়া যাইতেছেন।" তখন সেই গ্রামে মহল্লক বা গ্রামবৃদ্ধগণ সেই গ্রামিকের কথা শুনিয়া সেই প্রত্যেকবুদ্ধকে সংকারযোগ্য মনে করিলেন। গ্রামিক প্রত্যেকবুদ্ধকে স্বগৃহে লইয়া গিয়া আহারদ্বারা তাঁহাকে সম্মান দেখাইয়া তাঁহাকে যাবজ্জীবন (আহারে) উপনিমন্ত্রণ করিয়া রাখিলেন—"আমি আর্যকে (মহাশয়কে) যাবজ্জীবন সর্বপ্রকার সুখ উপস্থাপন করিব বলিয়া উপনিমন্ত্রণ করিলাম।" তিনি স্বয়ং দুহিতাকে জানাইয়া রাখিলেন—"দেখিও তুমি এই আর্যকে প্রতিদিবস আহারদ্বারা সেবা করিবে।" তাঁহার দারিকা বা কন্যা প্রীত ও তুষ্ট হইল—"বড় ভাল হইল যে আমাকে শোভন ও কল্যাণকর কর্ম করিতে হইবে।" তখন সেই (দারিকা) প্রতিদিন সেই প্রাসাদিক ও দেব-মনুষ্যের প্রতি অভিপ্রসন্ন প্রত্যেকবুদ্ধকে আহারদ্বারা সেবা করিতে লাগিল। সেই মহাভাগ (মহাশয়) প্রত্যেকবুদ্ধ (এখন) পরিজ্ঞাত-ভোজন হইয়া (অর্থাৎ ভোজনদ্রব্যের যথাযথ গুণাগুণ জানিয়া) সর্বপ্রকার অশুচির ক্ষয় লাভ করিলেন। তখন প্রত্যেকবুদ্ধের সেই সর্ব ঈর্যা বা

जना प्रसन्ना। सो दानि प्रत्येकबुद्धो तस्य ग्रामिकस्य प्रसादेन तत्रैव ग्रामक्षेत्रे अनुपादाय परिनिर्वृत्तो।

ततो ग्रामिकेन त प्रत्येकबुद्ध ध्यायेत्वा स्तूप कृत न चातिक्षुड्डाक न चातिमहन्त सुधामृत्तिकालेपन। सा दानि ग्रामिकस्य धीता त स्तूप दैवसिक कास्यपात्रेण पूजेति गन्धेन माल्येन च धूपेन च। पश्चात्ततो स्तूपातो त नानाप्रकार माल्य वातेन अपवर्पीयते। ताये दानि त माल्य सकड्ढित्वा चेटीहि सार्ध दीर्घमालागुडिका निचितोपचिता नानापुष्पाणा। तत्र ताये मालाये त प्रत्येकबुद्धस्य स्तूप सर्व परिवेठित। तस्या ता माला तहिं स्तूपे स्थिता च माला च सर्वा रूपेण च तेजेन च अभिभवित्वा तिष्ठन्ती देवेषु दिव्यमायु प्रमाण क्षपेत्वा शोभन्ती दृष्ट्वा अतिरिव चित्तप्रसादमुत्पन्न। सा दानि प्रसन्नचित्ता प्रणि(३०३)धानमुत्पादेति। यादृशेषा माला अत्र स्तूपे शोभति एतादृशा मे माला मूर्ध्नि प्रादुर्भवेया यत्रयत्र उपपद्येय।

---

আচরণ লক্ষ্য করিয়া সেই গ্রামিকের দুহিতার মনে উদার প্রসাদ (শ্রদ্ধা) উৎপন্ন হইল। অন্য লোকেরাও তাঁহাকে শ্রদ্ধা দেখাইতে লাগিল। তখন সেই প্রত্যেকবুদ্ধ সেই গ্রামিকের প্রসাদ বা শ্রদ্ধা লাভ করিয়া সেই গ্রামক্ষেত্রেই সম্পূর্ণরূপে পরিনির্বাণ লাভ করিলেন।

তৎপর সেই গ্রামিক সেই প্রত্যেকবুদ্ধকে অগ্নিসাৎ করিয়া (অর্থাৎ অগ্নিদ্বারা তাঁহার সৎকার সাধন করিয়া) এক স্তূপ নির্মাণ করাইয়া দিলেন—ইহা খুব ছোটও নহে খুব বড়ও (উচ্চও) নহে এবং ইহাতে সুধামৃত্তিকা (চূণমাটি) দ্বারা লেপ দেওয়া হইল। তখন গ্রামিকের সেই দুহিতা সেই স্তূপটি প্রতিদিন কাংস্যপাত্রে আহার্য দিয়া অথবা কাংস্যপাত্রমধ্যে গন্ধ, মাল্য ও ধূপ রাখিয়া তদ্দ্বারা পূজা করিতে লাগিলেন। পরে (একদিন) সেই স্তূপ হইতে সেই নানাপ্রকার মাল্য বাতদ্বারা অপকৃষ্ট হইল (অর্থাৎ বায়ু মাল্য উড়াইয়া লইয়া গেল)। তখন সেই (গ্রামদুহিতা) সেই মাল্যগুলি কুড়াইয়া লইয়া চেটীগণের সাহায্যে এক দীর্ঘ মালাগুটিকা নানাবিধ পুষ্পসমূহদ্বারা গ্রথিত করাইয়া লইলেন। সেখানে সেই মালাদ্বারা প্রত্যেকবুদ্ধের সেই সব স্তূপটি পরিবেষ্টিত করা হইল। যে মালা (অন্য) সব মালাকে নিজের রূপ ও তেজ দ্বারা অভিভূত করিয়া অবস্থিত ছিল এবং যাহা দেবগণের মধ্যে দিব্য আয়ুঃপরিমাণ পর্যন্ত টিকিয়াও পূর্ণশোভমান ছিল—সেই মালাটিকে স্তূপে অবস্থিত দেখিয়া তাঁহার (গ্রামিকদুহিতার) অত্যন্ত অধিক চিত্তপ্রসাদ উৎপন্ন হইয়াছিল। তখন সেই প্রসন্নচিত্তা (গ্রামিকদুহিতা) একটি (৩০৩) প্রণিধান বা সনির্বন্ধ প্রার্থনা মনে উঠাইলেন—“আমি যেখানে যেখানে (অথবা, যে সময়ে যে সময়ে) জন্মগ্রহণ করিব—আমার মস্তকে যেন সেইরূপ একটি মালা প্রাদুর্ভূত হয়—যাদৃশী মালা এই স্তূপে শোভা পাইতেছে।”

सा दानि तं कल्याणं कर्म कृत्वा तत्र च्यवित्वा देवेषूपपन्ना रतनमालाये आवद्धा तस्या तहिं उपपन्नाये अप्सरसां शतसहस्रं परिवारेसि।

ततो पि च्युता वाराणसीयं कृकिस्य राज्ञो अग्रमहिषीये कुक्षिस्मि उपपन्ना। नवानां वा दशानां वा मासानामत्ययेन देवीये दारिका प्रजाता प्रासादिका दर्शनीया रतनमालाये आवद्धा। तस्या मालिनीति नामं कृतं। राज्ञो कृकिस्य प्रिया मनापा तथा सर्वस्य परिजनस्य सम्मता सर्वस्याधिष्ठानस्य यावत्कृतपुण्या दारिका।

प्रतियेकबुद्धो ग्रामं पिण्डाय उपसंक्रमे।
यथाधौतेन पात्रेण ततो ग्रामातो निष्क्रमेत् ॥१॥
तमेनं ग्रामिको दृष्ट्वा संवुद्धमिदमब्रवीत्।
किञ्चि अरोगो भगवां लभ्यते पिण्डयापनं ॥२॥
ततोऽस्य भगवान् पात्रं ग्रामिकस्य प्रणामये।
न चात्र अदर्शी भिक्षां दौर्मनस्यं ग्रामिकस्यभूत् ॥३॥

---

তারপর সেই কল্যাণকর কর্ম করিয়া সেই (গ্রামিকদুহিতা) সেখানে মৃত্যু লাভ করিয়া, দেবগণমধ্যে উৎপন্ন হইয়া রত্নমালাদ্বারা আবদ্ধ হইলে পর, সেখানে কৃতজন্ম-পরিগ্রহা তাঁহাকে শতসহস্রসংখ্যক অপ্সরা (সেবার্থ) পরিবৃত করিয়া রহিল।

সেখান হইতেও চ্যুত হইয়া (অর্থাৎ মৃত্যু লাভ করিয়া) (সেই গ্রামিকদুহিতা) বারাণসীতে কৃকি রাজার অগ্রমহিষীর কুক্ষিতে জন্ম লইলেন।

নয় বা দশ মাসের অত্যয় (ক্ষয়) ঘটিলে, দেবীর (রাজমহিষীর) এক সুন্দরী বা রমণীয়া, দর্শনীয়া, রত্নমালায় আবদ্ধা এক দারিকা জন্মলাভ করিল। তাহার নাম করা হইল 'মালিনী'। এই কন্যাটি রাজা কৃকির প্রিয়া ও মনোমোহিনী হইল—সকল পরিজনেরই সম্মত বা ইষ্ট হইল—এবং সর্ব অধিষ্ঠান বা রাজধানীরই নিকট কৃতপুণ্যা বলিয়া গৃহীত হইল।

(গল্পটির পদ্য-সংস্করণ)

একটি প্রত্যেকবুদ্ধ কোন গ্রামে পিণ্ড-নিমিত্ত (আহার্যলাভার্থ) উপসংক্রান্ত হইয়াছিলেন। (কিন্তু, তিনি) সেই গ্রাম হইতে যথাধৌত (শূন্য) পাত্র লইয়াই নিষ্ক্রান্ত হইয়াছিলেন॥ ১॥

সেই এই সম্বুদ্ধকে দেখিয়া গ্রামিক এই কথা বলিলেন—"এই রোগবিহীন ভগবান্ পিণ্ডার্থ কিছু কিঞ্চিৎ লাভ করিলেন কি না"॥ ২॥

তৎপর ভগবান্ এই গ্রামিকের নিকট পাত্রটি নামাইয়া দেখাইলেন; এবং ইহাতে তিনি কোন ভিক্ষাই (প্রদত্ত) দেখিলেন না। গ্রামিকের দৌর্মনস্য উপস্থিত হইল (অর্থাৎ মনে দুঃখভাব উদিত হইল)॥ ৩॥

अन्धभूतो अय लोको मिथ्यादृष्टिहतो सदा ।
एतादृश दक्षिणीय न पूजेन्ति यथारह ।।४।।
ग्रामान्त उपसक्रम्य स्थिहित्वान चतुष्पथे ।
अविधाविध ति क्रन्दति ततो सनिपते जना ।।५।।
महाजनो समागत्वा इस्त्रियो पुरुषा पि च ।
ग्रामिक उपसक्रम्य किं करोम अविधाविध ति ।।६।।
(३०४) ग्रामिको आह ।
य नून कोटि युष्माक न सविभागरतो जनो ।
एषो हि एतस्मि ग्रामस्मि एको भिक्षु विहन्यति ।।७।।
ग्रामिकस्य वचन श्रुत्वा सर्वो ग्रामो सइस्त्रियो ।
सारायणीय करेन्सु सबुद्धस्य पुन पुन ।।८।।
तमेन ग्रामिको वच सभार्याको सपुत्रको ।
सर्वसुखविहारेण निमन्त्रेमि तथागत ।।९।।
ग्रामिकस्य स्वका धीता शुचिवस्त्रा सुवासना ।
आचारगुणसम्पन्ना उपस्थीय तथागत ।।१०।।

---

(তিনি ভাবিলেন—) "এই পৃথিবীর লোকেরা অন্ধভূত এবং তাহারা মিথ্যা দৃষ্টিদ্বারা (ধর্মসম্বন্ধে ভ্রান্ত মতবাদদ্বারা) হত। (তাহা না হইলে) কেন তাহারা এই রূপ দক্ষিণার্হ ব্যক্তিকে যথাযথভাবে পূজা দিতেছে না?॥ ৪॥

গ্রামান্তে (গ্রামসীমাতে) উপস্থিত হইয়া চতুষ্পথে দাঁড়াইয়া (তিনি) 'অবিধা! অবিধা'! বলিয়া ক্রন্দন করিতে লাগিলেন। তৎপর সেখানে অনেক লোক সন্নিপতিত বা একত্রিত হইল॥ ৫॥

স্ত্রী পুরুষ সহ মহাজন বা জনতা সমাগত হইয়া গ্রামিকের নিকট অগ্রসর হইয়া (জিজ্ঞাসা করিল) 'কেন 'অবিধা! অবিধা! (উচ্চারিত হইতেছে,) আমরা কি করিতে পারি!" ॥ ৬॥

(৩০৪) গ্রামিক উত্তরে বলিলেন—

"তোমরা নিশ্চয়ই কোটি কোটি লোক এখানে। কিন্তু কোন লোকই সংবিভাগরত (বা দ্রব্যদানকারী) নহে। যে-হেতু এই গ্রামে এই একটি ভিক্ষু দুঃখ ভোগ করিতেছেন॥ ৭॥

স্ত্রীলোক সহ সেই সর্ব গ্রাম (অর্থাৎ গ্রামস্থ জনেরা) গ্রামিকের বচন শুনিয়া সংবুদ্ধের প্রতি পুনঃ পুনঃ সারায়ণীয় (সংরঞ্জনীয়) বাক্য (অর্থাৎ অভিনন্দনবচন) প্রয়োগ করিল॥ ৮॥

গ্রামিক ভার্যা ও পুত্রসহ তাঁহাকে বলিলেন—"তথাগতকে আমি সর্বপ্রকার সুখবিহারের জন্য নিমন্ত্রণ করিতেছি"॥ ৯॥

ग्रामिकस्य प्रसादेन तस्मि ग्रामस्मिं सुव्रतो ।
संबुद्धो परिनिर्वायि ऋषि क्षीणपुनर्भवः ।।११।।
तं निर्वृतं ध्यायेत्वान स्तूपं कारेसि ग्रामिको ।
नृत्यवादितगीतेन पूजां कारेसि महर्षिणो ।।१२।।
समासाद्य सितं पुष्पं वातेन अपकर्षितं ।
एकाध्यं संहरित्वान दीर्घमालां वगूहयेत् ।।१३।।
सा यादृशी तत्रैव मह्यं माला चित्रा उपनिश्रिता ।
एतादृशी मे शिरसि भोतु माला यथा अयं ।।
यत्रयत्रोपपद्येहं तत्र मेतं समृध्यतु ।।१४।।
सा तं कर्म करित्वान कल्याणं बुद्धवर्णितं ।
त्रायस्त्रिशेषु देवेषु उपपद्यिथ अप्सरा ।।१५।।
अप्सराशतसहस्रं च पुरस्कृत्वान तां स्थिता ।
तासां सा प्रवरा श्रेया नारी सर्वाङ्गशोभना ।।१६।।
(३०५) ततो तासां च्यवित्वान देवकन्या महर्द्धिका ।
राज्ञो कृकिस्य भार्याय कुक्षिस्मिं उपपद्यिथ ।।१७।।

---

গ্রামিকের আচারগুণসম্পন্না নিজ দুহিতা শুচিবস্ত্রা ও শুভবাসনাযুক্তা হইয়া (অথবা, সুবাসন বা সুবস্ত্র পরিধান করিয়া) তথাগতকে সেবা করিতে লাগিল॥ ১০॥

গ্রামিকের প্রসাদ বা শ্রদ্ধা লাভ করিয়া সেই সুব্রত সংবুদ্ধ ঋষি পুনর্ভব বা পুনর্জন্ম ক্ষয় করিয়া সেই গ্রামেই পরিনির্বাণ লাভ করিলেন॥ ১১॥

সেই নির্বাণপ্রাপ্ত (ঋষির) অগ্নিসংকার করিয়া গ্রামিক এক স্তূপ নির্মাণ করাইলেন এবং নৃত্য, বাদিত্র ও গীতদ্বারা মহর্ষির পূজা করিলেন॥ ১২॥

বাতদ্বারা অপকর্ষিত বা প্রবাহিত শ্বেত পুষ্পসমূহ পাইয়া, (গ্রামিকের দুহিতা), সে-গুলিকে একত্র সংগ্রহ করিয়া, (তদ্দ্বারা) একটি দীর্ঘমালা গুম্ফন করিলেন॥ ১৩॥

যেখানে (যখন) যেখানে (যখন) আমি উৎপন্ন হই না কেন, সেখানে (তখন) যেন আমার এই অভিলাষ পূর্ণ হয়—'সেই স্থানে (স্তূপে) যাদৃশী বিচিত্র মালা আমি উপস্থাপিত করিয়াছি, তাদৃশী মালা যেন আমার মস্তকে শোভা পায়'॥ ১৪॥

অনন্তর বুদ্ধের স্তুতির জন্য সেই কল্যাণ কর্ম করিয়া, (সেই গ্রামিকদুহিতা) ত্রায়স্ত্রিংশৎ দেবমধ্যে অপ্সরা হইয়া জন্ম লইলেন॥ ১৫॥

শত সহস্র অপ্সরা তাহাকে অগ্রে রাখিয়া (সেবার্থ) অবস্থান করিল। (কিন্তু,) তাহাদের মধ্যে সর্বাঙ্গশোভনা সে-ই শ্রেষ্ঠ নারী ছিল॥ ১৬॥

(৩০৫) সেখান হইতে চ্যুত বা অন্তর্হিত হইয়া তাহাদের মহা-ঋদ্ধি-যুক্ত সেই দেবকন্যা কৃকি রাজার ভার্যার কুক্ষিতে উৎপন্ন হইল॥ ১৭॥

निर्गते द्वादशमासे राजभार्या प्रजायत ।
मालिनी नाम नामेन नारी सर्वाङ्गशोभना ।।१८।।
अतिवर्णा अतिरूपवती अभूत् ।
श्रेष्ठा च राजकन्याना धीता सा काशिराजिनो ।।१९।।
आचारगुणसम्पन्ना शुचिवस्त्रा सुवासना ।
राज्ञो कृकिस्य अन्तिके तिष्ठते प्राजलीकृता ।।२०।।
तमेनमवदद्राजा तिष्ठन्ती प्राजलीकृता ।
ब्राह्मणा मे तुव भद्रे भोजापेहि अतन्द्रिता ।।२१।।
पितु सा वचन श्रुत्वा ब्राह्मणानामनूनका ।
विंशत्सहस्रा भोजेति सर्वकामेहि मालिनी ।।२२।।
तमेन ब्राह्मणा दृश्य मालिनीमप्सरोपमा ।
रागग्रसितचित्तादच उल्लपन्ति पुनर्पुन ।।२३।।
उद्धता उन्नता दृप्ता चपला प्राकटेन्द्रिया ।
मालिनी मविचिन्तेति न इमे दक्षिणारहा ।।२४।।
सा आरुहित्वा प्रासाद समन्तेन विलोक्ये ।
अदर्शी भगवतो शिष्य सवुद्धस्य शिरीमतो ।।२५।।

---

(গর্ভের) দ্বাদশ মাস নির্গত হইলে পর, রাজভার্যা মালিনী নামে এক সর্বাঙ্গ শোভনা নারী প্রসব করিলেন॥ ১৮॥

(সেই কন্যা) অত্যন্ত উৎকৃষ্টবর্ণযুক্তা ও অত্যন্ত রূপবতী ছিল। কাশিরাজের সেই দুহিতা রাজকন্যাগণের মধ্যে শ্রেষ্ঠা ছিল॥ ১৯॥

আচারগুণসম্পন্না শুক্লবস্ত্রা ও উৎকৃষ্টবসনধারিণী (সেই কন্যা) প্রাঞ্জলীরচনা করিয়া কৃকি রাজার অন্তিকে আসিয়া দাঁড়াইল॥ ২০॥

প্রাঞ্জলীরচনা করিয়া দণ্ডায়মানা সেই কন্যাকে রাজা বলিলেন—"হে ভদ্রে তুমি অনলস ভাবে ব্রাহ্মণদিগকে ভোজন করাইও ॥ ২১॥

পিতার বচন শুনিয়া সেই (দুহিতা) মালিনী ক্রমশঃ বিংশতি সহস্র ব্রাহ্মণকে সর্ব কামবস্তুদ্বারা ভোগ করাইতে লাগিল॥ ২২॥

অপ্সরাদিগের ন্যায় সুন্দরী সেই মালিনীকে দেখিয়া ব্রাহ্মণগণ রাগদ্বারা গ্রসিতচিত্ত হইয়া পুনঃ পুনঃ উল্লাস (উচ্চস্বরে আলাপ) করিতে লাগিলেন॥ ২৩॥

তাহাদিগকে উদ্ধত উন্নত বা অবিনীত চপল ও প্রকটভাবে ইন্দ্রিয়পরায়ণ দেখিয়া মালিনী মনে মনে বিবেচনা করিলেন—"ইহারা দক্ষিণার্হ হইতে পারে না"॥ ২৪॥

সে (মালিনী) প্রাসাদের উপর উঠিয়া চতুর্দিকে বিলোকন করিল (এবং) ঐদিন ভগবান সম্বুদ্ধের একটি শিষ্যকে দেখিতে পাইল॥ ২৫॥

सा प्रासादवरगता काशिकवरचन्दनेन आलिप्ता ।
राज्ञो कृकिस्य धीता सर्वा दिशता विलोकेति ॥२६॥
सा अद्दशासि. . . .प्रासादिकेनिंजितेन प्रविशन्तां ।
बुद्धस्य श्रावकान् वाहितपापां अन्तिमशरीरां ॥२७॥
(३०६) सा दासीं प्रेषेति एतेषां ऋषीणां वन्दनं ब्रुहि ।
वन्दित्वा च भणाहि प्रविशथ भदन्त निषीदाथ ॥२८॥
सा दासी उपगम्य पादां वन्दित्वा भावितात्मनां ।
प्राञ्जलिकृता अवोचत् प्रविशथ भदन्त निषीदाथ ॥२६॥
रागा उपातिवृत्ता विशारदा अग्रपण्डिता लोके ।
बुद्धस्य श्रावका वाहितपापा अन्तिमशरीरा: ॥३०॥
तं पाण्डरं च सुकृतं सुतोरणं खड्गअसिगुप्तं।
प्रवेशेन्सु: अन्त:पुरं राज्ञो धीतुर्मनापाये ॥३१॥
काशिकप्रत्यास्तरणं सुविचित्रकलापकं मणिविचित्रं ।
विचित्रपुष्पावकीर्ण प्रज्ञप्तं आसनं आसि ॥३२॥
पद्ममिव शुभाभासं जलेरुहं यथ जले अनुपलिप्तं ।
तथ अनुपलिप्तचित्ता तत्र निषीदे विगतमोहा ॥३३॥

---

কাশিদেশের শ্রেষ্ঠ চন্দনদ্বারা আলিপ্ত হইয়া কৃকি রাজার সেই দুহিতা প্রাসাদ-বরে আসিয়া সব দিকে দৃষ্টিক্ষেপ করিতে লাগিল॥ ২৬॥

সে দেখিল...রমণীয় গতিতে বুদ্ধের শ্রাবকগণ (সেদিকে) প্রবেশ করিতেছেন—তাঁহারা সব পাপ হইতে মুক্ত ও শেষবারের মত শরীরধারী ছিলেন॥ ২৭॥

(৩০৬) 'এই ঋষিদিগকে (আমাদের) বন্দনা জানাও' এই বলিয়া সে এক দাসীকে প্রেরণ করিলেন এবং তাহাকে বলিল "বন্দনার পরে এইরূপ বলিবে—'হে ভদন্তগণ আপনারা প্রবেশ করুন, উপবেশন করুন'"॥ ২৮॥

সেই দাসী ভাবিতাত্ম (ধ্যানপরিশোধিতাত্ম বা সংযতাত্ম) ঋষিদিগের নিকট অগ্রসর হইয়া তাঁহাদের পাদবন্দনাপূর্বক কৃতপ্রাঞ্জলি হইয়া বলিলেন—'হে ভদন্তগণ, আপনারা প্রবেশ করুন, উপবেশন করুন'॥ ২৯॥

রাগ হইতে নিবৃত্ত, বিশারদ, ইহলোকে প্রধান পন্ডিত বলিয়া পরিচিত, নিষ্পাপ ও অন্তিমশরীরধারী বুদ্ধ-শ্রাবকগণ মনোহারিণী রাজদুহিতার শ্বেতবর্ণ, উত্তমভাবে নির্মিত, এবং সুতোরণযুক্ত, এবং খড়্গ ও অসিদ্বারা সংরক্ষিত অন্তঃপুরে প্রবেশ করিলেন॥ ৩১-৩১॥

(সেখানে) কাশিদেশীয় প্রত্যাস্তরণযুক্ত, সুবিচিত্র কলাপ (ময়ূর-পিচ্ছ বা মুক্তাহার) দ্বারা শোভিত, মণি-মনোরম, বিচিত্র পুষ্পরাশিদ্বারা অবকীর্ণ আসন রচিত বা প্রস্তুত ছিল॥ ৩২॥

शालीनामोदनविधिमवालकमनेकव्यञ्जनमुपेतं ।
स्वहस्तमुपनामयते यथा भदन्तान अभिरोचे ।।३४।।
ते भिक्षू अवचेन्सु शास्ता मो अग्रपण्डितो लोके ।
तस्या प्रथम भक्त मो भुजये व महावीरो ।।३५।।
बुद्धो ति श्रुणित्व घोष लोके कुतूहल अश्रुतपूर्वं ।
अधिकतर सा प्रसीदे इमेहि किल सो विशिष्टतरो ।।३६।।
सा मालिनी अवोच भुञ्जित्वा शास्तुनो हरथ भक्त ।
(३०७) अभिवादन च ब्रुथ मम वचनातो लोकनाथस्य ।।३७।।
अधिवासे भक्त भगवा सुवेतना सार्धं भिक्षुसंघेन ।
अन्त पुरस्य मध्ये राज्ञो धीतुर्मनापाय ।।३८।।

ते दानि भगवतो काश्यपस्य अग्रश्रावका तिष्यो च भारद्वाजो मालिनीये भक्त परिभुजित्वा भगवतो काश्यपस्य भक्तमादाय ऋषिवदन निर्धाविता। भगवतो काश्यपस्य पिण्डपात्रमुपनामेत्वा मालिनीये वचनेन भगवन्त काश्यप

---

শুভাভাস (সুকান্তি) জলেরুহ পদ্ম যেমন জলদ্বারা অনুপলিপ্ত তেমন অনুপলিপ্তচিত্ত বিগতমোহ (সেই বুদ্ধশ্রাবকেরা) সেখানে উপবেশন করিলেন॥ ৩৩॥

ভদন্তগণের অভিরুচি অনুসরণ করিয়া কালকনামক শস্যশূন্য ও অনেক ব্যঞ্জনযুক্ত শালীধান্যের ওদন (ভাত) স্বহস্তে প্রস্তুত করিয়া (মালিনী নিজে) তাহা (তাঁহাদিগের নিকট) পরিবেশন করিল॥ ৩৪॥

সেই ভিক্ষুরা বলিলেন—'আমাদের শাস্তা জগতে অগ্রপণ্ডিত (সর্বোত্তম পণ্ডিত)। তাঁহার (প্রস্তুত) ভক্ত বা ভাত সেই মহাবীরই সর্বপ্রথম ভোজন করিবার যোগ্য ॥ ৩৫॥

'বুদ্ধ' এই অশ্রুতপূর্ব শব্দটি শুনিবার পর লোকমধ্যে কুতূহল উপস্থিত হইল (অথবা অশ্রুতপূর্ব কুতূহল দেখা দিল)। সে (মালিনী)—তিনি (বুদ্ধ) ইঁহাদিগের অপেক্ষায়ও বিশিষ্টতর—ইহা বুঝিয়া অধিকতর প্রসাদ বা শ্রদ্ধালাভ করিল॥ ৩৬॥

সেই মালিনী বলিল—'আপনারা ভোজন করিয়া শাস্তার জন্য ভক্ত বা ভাত বহন করিয়া নিবেন। (৩০৭) এবং আমার বচনানুসারে লোকনাথকে (বুদ্ধকে) আমার অভিবাদন জ্ঞাপন করিবেন' ॥ ৩৭॥

'ভগবান ভিক্ষুসংঘ সঙ্গে লইয়া আগামী দিনে রাজার মনোহারিণী দুহিতার অন্তঃপুরের মধ্যে ভক্ত বা ভাত গ্রহণের নিমন্ত্রণ স্বীকার করুন' ॥ ৩৮॥

তৎপর ভগবান কাশ্যপের দুই অগ্রশ্রাবক (প্রধান শিষ্য) তিষ্য ও ভারদ্বাজ মালিনীর ভক্ত বা অন্ন নিজেরা আহার করিয়া ভগবান কাশ্যপের জন্য ভক্ত বা অন্ন লইয়া ঋষিবদনের (=ঋষিপত্তনের) দিকে দ্রুত গমন করিলেন। (তাঁহারা) ভগবান কাশ্যপের জন্য আনীত পিণ্ডপাত্র সমীপে রাখিয়া মালিনীর বচনানুসারে ভগবান

वन्दन वदेन्सु । कृकिस्य भगव काशिराज्ञो धीता भगवतो वन्दन पृच्छति सश्रावकसघस्य शुवेदानि च भक्तेन निमन्त्रेति सार्धं भिक्षुसघेन राज्ञो कृकिस्य अन्त पुरे तस्या भगवा अधिवासेतु अनुकम्पामुपादाय। भगवता काश्यपेन वैनेयवशेन अधिवासित। ये तेहि महाश्रावकेहि सार्ध पुरुषा गता भगवता काश्यपस्य ओवादमादाय तेहि गत्वा मालिनीये निवेदित। अधिवासित तेन भगवतो काश्यपेन शुवेदानि भक्त सार्ध भिक्षुसघेन। मालिनीये तेषा पुरुषाणा श्रुत्वा तामेव रात्रि प्रभूत खादनीय भोजनीय प्रतिजागरित्वा भगवतो काश्यपस्य कालमारोचापित। भगवा कालज्ञो वेलाज्ञो समयज्ञो पुद्गलज्ञो पुद्गलपरापरज्ञो। काल्यमेव निवासयित्वा पात्रचीवरमादाय येन चारिकाविकालो सप्राप्तो साय मागधे प्रातराशे वर्तमाने सार्ध विशतीहि भिक्षुसहस्रेहि वाराणसि नगर प्रविशेत्। हसप्रडीनकमिव बुद्धा भगवन्तो नगर प्रविशन्ति। दक्षिणपार्श्वे तिष्यो महाश्रावको। वामे पार्श्वे भारद्वाजो महाश्रावक। तेषा पृष्ठतो चत्वारो महाश्रावका चतुर्णा अष्ट अष्टाना षोडश षोडशाना द्वात्रिंश द्वात्रिंशताना चतुषष्टि।

---

কাশ্যপের বন্দন জানাইলেন—হে ভগবন, কাশিরাজ কৃকির দুহিতা সশ্রাবকসংঘ ভগবানের বন্দনা জানাইয়া আগামী দিবসের ভক্ত বা অন্ন গ্রহণের জন্য রাজা কৃকির অন্তঃপুরে নিমন্ত্রণ করিতেছে। তাঁহার প্রতি অনুকম্পা প্রদর্শন করিয়া ভগবান্ সেই নিমন্ত্রণ গ্রহণ করুন।" ভগবান্ কাশ্যপ বিনয় শিক্ষার জন্য সেই নিমন্ত্রণ স্বীকার করিলেন। মহাশ্রাবকদ্বয়ের সঙ্গে যে পুরুষেরা গিয়াছিল তাহারা ভগবান কাশ্যপের (নিমন্ত্রণ স্বীকারবিষয়ক) অববাদ বা উৎসাহবচন লইয়া মালিনীর নিকট নিবেদন করিল—'ভগবান কাশ্যপ ভিক্ষুসংঘ সহ আগামী কল্যকার ভক্ত বা অন্নভোজন স্বীকার করিয়াছেন।' সেই পুরুষদিগের কথা শুনিয়া মালিনী সেই রাত্রিতেই জাগরণ করিয়া প্রভূত খাদনীয় ও ভোজনীয় দ্রব্য প্রস্তুত করিলেন এবং ভগবান্ কাশ্যপের (আহারার্থ আগমনের) কালও তাহার নিকট কথিত বা বিজ্ঞাপিত হইল। ভগবান কালজ্ঞ বেলাজ্ঞ, সময়জ্ঞ, পুদ্গলজ্ঞ ও পুদ্গলদিগের পরম্পরের প্রভেদজ্ঞও ছিলেন। পরদিন প্রত্যূষে পরিহিতবস্ত্র হইয়া মগধদেশীয় প্রাতরাশ বা প্রাতর্ভোজন সমাপন করিয়া—(তিনি) পাত্র ও চীবর লইয়া, সন্ধ্যাকালে চারিকা বা ভিক্ষাটন যখন অবসিত হইল তখন বিংশতি সহস্র ভিক্ষু সহ বারাণসী নগরে প্রবেশ করিলেন। ভগবান্ বুদ্ধগণ হংসগণের প্রডীনকের বা উড্ডয়নের মত (উড্ডয়নপূর্বক) নগরে প্রবেশ করেন। তাঁহার দক্ষিণ পার্শ্বে ছিলেন মহাশ্রাবক তিষ্য বামপার্শ্বে ছিলেন মহাশ্রাবক ভারদ্বাজ। তাঁহাদের পৃষ্ঠদেশে (পশ্চাদ্দেশে) চারিজন মহাশ্রাবক ছিলেন সেই চারি জনের পশ্চাৎ ছিলেন আট জন সেই আট জনের পশ্চাৎ ছিলেন ষোল জন, ষোলজনের পশ্চাৎ ছিলেন বত্রিশজন, আবার সেই বত্রিশজনের পশ্চাৎ ছিলেন চৌষট্টিজন মহা-

विंशतिहि भिक्षुसहस्रेहि पुर(३०८)स्कृतो राज्ञो कृकिस्य अन्त:पुरं
भगवतो नगरं प्रविशन्तस्य ओनता भूमिरुन्नमति सम भूमितलं जातं
अशुचिपाषाणशर्करकठल्ला भूमिं प्रविशन्ति मुक्तपुष्पावकीर्णा
त। पुष्पोपगा वृक्षा पुष्पन्ति फलोपगा वृक्षा फलन्ति। ये तत्र
क्षिणेन वापीयो वा पुष्करिणीयो वा शीतलस्य वारिस्य भरिता
ालपद्मकुमुदपुण्डरीकनलिनीसौगन्धिकाप्रच्छन्ना। उदुपानमुखा तोयं
अश्वा ह्रेष्यन्ति ऋषभा नर्दन्ति हस्तिकुञ्जरा नर्दनं मुंचन्ति।
न्द्रकीलं पादेन चोन्नमति सर्वं च नगरं प्रकम्पति। अन्धा आलोकेन्ति
दं शृण्वति उन्मत्तका: स्मृतिं प्रतिलभन्ते व्याधिता व्याधितो मुचन्ति।
रोगा: प्रसूयन्ति नग्नाना चैला: प्रादुर्भवन्ति बन्धनबद्धानां बन्धनानि
पेडाकरण्डावृतानि रतनानि संघट्टन्ति भाजनानि रणन्ति। ये
रे परिवादिनीयो वल्लकीयो वेणुवीणामृदंगभेरीपणवा अनंखतान्यपि
। संप्रवाद्यन्ति। शुकसारिककोकिलहंसमयूरा: स्वकस्वकानि रुतानि

---

:ইভাবে ভগবান্ বিংশতি সহস্র ভিক্ষুদ্বারা পুরস্কৃত (৩০৮) হইয়া রাজা
:পুরে প্রবেশ করিলেন। ভগবান্ যখন নগরে প্রবেশ করিতেছিলেন তখন
নম্ন) ভূমি উন্নত (উচ্চ) হইতে লাগিল—তখন ভূমি সমতল হইয়া সংস্থিত
ব অশুচি পাষাণ, শর্করা (বা শিলাখণ্ড) ও পাষাণচূর্ণ তখন ভূমিতে প্রবেশ
ল—অধিকন্তু তখন মুক্ত পুষ্পসমূহদ্বারা অবকীর্ণ হইল। পুষ্পোপগ
(পুষ্পোৎপাদনকারী) বৃক্ষসমূহ পুষ্পিত হইতে লাগিল; ফলোপগ বৃক্ষসকল
। ধরিতে লাগিল। সে পথে বাম ও দক্ষিণ দিকে যে-সব বাপী বা পুষ্করিণী
গুলি শীতল জলে ভরিত বা পূর্ণ হইল এবং উৎপল, পদ্ম, কুমুদ,
ক ও নলিনীসমূহের সুগন্ধে আচ্ছন্ন হইল। উদপান বা কূপসমূহের মুখ-
ইতে জল প্রবাহিত হইল। অশ্বসমূহ হ্রেষারব করিতে লাগিল, বৃষভ বা
র্জন বা শব্দ করিতে লাগিল এবং বড় বড় হস্তী নাদ মোচন করিতে লাগিল।
বা তৎক্ষণাৎ ইন্দ্রকীল বা ইন্দ্রধ্বজ পাদপীঠ হইতে উৎক্রান্ত হইল এবং (সঙ্গে
সমস্ত নগর প্রকম্পিত হইল। অন্ধ ব্যক্তিরা দেখিতে লাগিল; বধির ব্যক্তিরা
শুনিতে লাগিল; উন্মত্ত জনেরা স্মৃতিশক্তি লাভ করিল; ব্যাধিত লোকেরা
হইতে মুক্তিলাভ করিল; গর্ভিণী বা গর্ভবতী নারীরা অরোগ অবস্থায় সুখ-
হইল; নগ্নলোকদিগের চেল বা বস্ত্র প্রাদুর্ভূত হইল; বন্ধনবদ্ধ লোকদিগের
ঘর স্ফোটিত হইয়া গেল; পেটে (পেটরা) ও করণ্ডকসমূহপূর্ণ রত্নরাজি
ট বা সংঘর্ষপ্রাপ্ত হইতে লাগিল; ও ভাজনসমূহে শব্দ উৎপাদিত হইতে
। সমরে অবস্থিত পরিবাদিনী (সপ্ততন্ত্রী বীণাবিশেষ), বল্লকী (বীণাবিশেষ)
বাঁশী), বীণা, মৃদঙ্গ, ভেরী ও পণবসমূহ অনাহত অবস্থায় (অর্থাৎ বাজাতে

मुचन्ति। चतुरङ्गुलेन च भूमि असंस्पृशन्तो गच्छति धरणितले च पदचक्राणि प्रादुर्भवन्ति सहस्त्राराणि सनाभिकानि सर्वाकारपरिपूर्णानि अन्तरीक्षे च देवा दिव्यानि तूर्यसहस्त्राणि प्रवादयन्ति दिव्यानि पुष्पवर्षाणि प्रवर्षन्ति। भगवा काश्यपो सश्रावकसघो एदृशाये विधीये एदृशाये विभूषाये एदृशेन समुदयेन एदृशाये ऋद्धीये एदृशेन विभवेन देवमनुष्येहि सत्क्रियन्तो सश्रावकसघो राज्ञो क्रकिस्य अन्त.पुर प्रविष्टो। भगवा मालिनीये सश्रावकसघो तहि अभ्यन्तरिमे चतु.शाले महासत्कारेण परिविष्टो प्रभूतेन प्रणीतेन खादनीयेन भोजनीयेन ऋजुरसेन अग्र(३०९)रसेन अविगतरसेन प्रत्यग्ररसेन। भगवां भुक्तावी सश्रावकसंघो धौतहस्तो अपनीतपात्रो मालिनी धर्मया कथया संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा सप्रहर्षयित्वोत्थायासनातो प्रक्रमे।

यानि तानि क्रकिस्य काशिराज्ञो विंशति ब्राह्मणसहस्त्राणि नित्यभोजिका ते कुपिता य मालिनीये भगवा काश्यपो सश्रावकसघो राजकुले परिविष्टो महता सत्कारेण महता सम्मानेन। तेहि सर्वा ब्राह्मणपरिषा सन्निपातिता अनेकानि

---

স্বরসঙ্গীত বা একতানতাব প্রাপ্তি ঘটে নাই এমন অবস্থায়), সংঘট্টিত না হইয়াই বাজিয়া উঠিল। শুক, সারিক, কোকিল, হংস ও ময়ূরগণ নিজ নিজ রব মোচন কবিতে লাগিল। (বুদ্ধ কাশ্যপ) চাবি অঙ্গুলিদ্বাবাও ভূমি স্পর্শ না কবিয়া চলিতে লাগিলেন, (কিন্তু, তথাপি) (তদীয়) পদচক্র(চিহ্ন)সমূহ, সহস্র অবযুক্ত, নাভিক (চক্রমধ্যভাগ)বিশিষ্ট ও সর্বপ্রকাব আকাবে পবিপূর্ণ হইয়া ধবণীতলে প্রাদুর্ভূত হইতে লাগিল, এবং অন্তবীক্ষে দেবগণ সহস্র সহস্র দিব্য তূর্য বাজাইতে লাগিলেন ও (সেখান হইতে) দিব্য পুষ্প-বর্ষণ কবিতে লাগিলেন। শ্রাবকসংঘ সঙ্গে কবিয়া ভগবান্ কাশ্যপ এইরূপ বিধিতে এইপ্রকাব বিভূতি, এইপ্রকাব সমুদয় বা দীপ্তি, এইপ্রকাব ঋদ্ধি, এইপ্রকাব বিভব-সহকাবে, দেব ও মনুষ্যগণদ্বাবা সংকৃত বা পূজিত হইয়া সশ্রাবকসংঘ বাজা কৃকিব অন্তঃপুবে প্রবেশ কবিলেন। সশ্রাবকসংঘ ভগবান্ (মালিনীব) সেই অভ্যন্তব চতুঃশালে মহাসৎকাবসহকাবে মালিনীকর্তৃক প্রভূতভাবে প্রস্তুত ঋজুবস, উত্তম- (৩০৯) বস, অদূবীভূত-বস ও প্রত্যগ্র- (নবীন বা অম্লান) বসযুক্ত খাদনীয ও ভোজনীয দ্রব্য-সমূহদ্বাবা কৃতপবিবেষণ হইলেন। সশ্রাবকসংঘ ভগবান্ (কাশ্যপ) আহাব সমাপন কবিযা, হাত ধুইয়া, (ভোজন) পাত্র অপনীত বা দূবস্থিত কবিযা, মালিনীকে ধর্মকথা-দ্বাবা উপদেশ দিযা, উদ্বুদ্ধ কবিযা, সমুত্তেজনা দিযা ও সংপ্রহর্ষিত করিয়া আসন হইতে উঠিযা চলিলেন।

কাশিবাজ কৃকিব নিত্যভোজনকাবী যে যে বিংশতি সহস্র ব্রাহ্মণ ছিলেন, তাঁহাবা কুপিত হইলেন—যে-হেতু মালিনী মহান্ সৎকাব ও সম্মানেব সহিত সশ্রাবকসংঘ ভগবান্ কাশ্যপকে বাজকুলে (খাদ্য) পরিবেষণ কবিতেছেন। তাঁহাবা অনেক সহস্র ব্রাহ্মণবহুল সর্ব ব্রাহ্মণপবিষৎকে একত্র সমাবেশিত কবিলেন। সেই কালে সেই সমযে

ब्राह्मणसहस्राणि। तेन कालेन तेन समयेन ब्राह्मणाक्रान्ता पृथिवी भवति। सन्निपतिता मालिनी घातेतुकामा। एषा येव अत्र राजकुले ब्राह्मणाना कण्टको उत्पन्नो। कृकिश्च राजा ब्राह्मणेषु अभिप्रसन्नो तस्य विंश ब्राह्मणसहस्रा दैवसिक भुजन्ति एषा च पितृणा ब्राह्मणाना नियोजिता एतानि ब्राह्मणानि दैवसिक भोजेहीति। एताये ब्राह्मणाना अवमन्यित्वा श्रमणा राजकुले प्रवेशिता एषा च एदृशो पूजासत्कारो कृतो। सा एषा यत्त ब्राह्मणाना उपजीव्य राजकुलातो पूजासत्कारार्थं श्रमणाना परिणामेति मानयन्तीति। तेहि ब्राह्मणेहि एषो व्यवसायो कृतो मालिनी मारेतव्या। कृकी च काशिराजा जनपद प्रत्यवेक्षको व गतो। तेहि ब्राह्मणेहि कृकिस्य राज्ञो दूतो प्रेषितो। एदृश मालिनीये ब्राह्मणाना मूले अबहुमानमुत्पन्न। काश्यपस्य सश्रावकसंघस्य राजकुल प्रवेशित्वा एदृशो च पूजासत्कारो कृतो ब्राह्मणाना दर्शन पि न देति। यथा महाराजेन संदिष्ट तथा न करोति। यन्तु ब्राह्मणाना राजकुले नित्यक विंशतीना ब्राह्मणसहस्राणा त पि न वर्तति। मालिनी ब्राह्मणाना दर्शन पि न देति। राजा श्रुतमात्रेणैव जनपदातो (३१०) वाराणसिमागतो पश्यति अनेका ब्राह्मणाना

---

পৃথিবী ব্রাহ্মণাক্রান্তা ছিল। তাঁহারা একত্রিত হইয়া মালিনীকে বধ করিতে ইচ্ছুক হইলেন। এই (মালিনীই) এই রাজকুলে ব্রাহ্মণদিগের কণ্টকস্বরূপ হইয়া উঠিয়াছে। কৃকি রাজা ব্রাহ্মণদিগের উপর অভিপ্রসন্ন (প্রীতিতে অনুরক্ত) ছিলেন। তাঁহার (রাজকুলে) বিংশতি সহস্র ব্রাহ্মণ দৈবসিক (প্রাত্যহিক) আহার ভোগ করিয়া থাকেন এবং এই (মালিনী) পিতাকর্তৃক ব্রাহ্মণদিগের (সেবার্থ) নিয়োজিত হইয়াছে এবং এই বলিয়া (উক্ত হইয়াছে) এই ব্রাহ্মণদিগকে তুমি দৈবসিক আহার্য দিয়া আহার করাইবে। সে (মালিনী) ব্রাহ্মণদিগকে অবমানিত করিয়া শ্রমণদিগকে রাজকুলে প্রবেশ করাইয়াছে এবং তাঁহাদের প্রতি এতাদৃশ পূজাসংকার প্রদর্শন করিয়াছে। রাজকুল হইতে পূজাসংকারার্থ ব্রাহ্মণেরা যে দ্রব্য উপজীব্যরূপে পাইতেছিলেন তাহা বিনিবর্তিত করিয়া সে (মালিনী) শ্রমণদিগকে দিয়া সম্মানিত করিতেছে। সেই ব্রাহ্মণেরা এইরূপ সংকল্প করিলেন যে মালিনীকে মারিয়া ফেলিতে হইবে। কাশিরাজ কৃকি জনপদের প্রত্যবেক্ষক হইয়া বাহির হইলেন। সেই ব্রাহ্মণেরা রাজা কৃকির নিকট দূত পাঠাইলেন (এবং বলিয়া পাঠাইলেন)—"ব্রাহ্মণদিগের প্রতি মালিনীর এতাদৃশ অবহুমান বা অনাদরভাব উৎপন্ন হইয়াছে? সশ্রাবকসংঘ কাশ্যপকে রাজকুলে প্রবেশ করাইয়া (সে) এতটা পূজাসংকার প্রদর্শন করিয়াছে এবং ব্রাহ্মণদিগকে দর্শনও দিতেছে না। মহারাজ তাঁহাকে যেরূপ করিতে বলিয়াছিলেন সে সেরূপ করে না। প্রতিদিন বিংশতি সহস্র ব্রাহ্মণের যে (আহারের) ব্যবস্থা ছিল তাহাও আর প্রচলিত নাই। মালিনী ব্রাহ্মণদিগকে দর্শনও দেয় না"।

এই বার্তা শুনিবামাত্রই রাজা জনপদ হইতে (৩১০) বারাণসীতে ফিরিয়া

सहस्रियो समागतानि। सो येन ब्राह्मणास्तेनैव गतो। ब्राह्मणा पि राज्ञो प्रत्युद्गता जयेन वर्धापयित्वा एतां प्रकृति मालिनीये तं सर्व कृकिस्य राज्ञो निवेदेन्ति। महाराज एषा मालिनी ब्राह्मणानां कण्टको उत्पन्ना न शक्यं ब्राह्मणेहि राज्ञो नित्यकं प्रतीच्छितुं यावन्न मालिनी घातिता। एष समग्राये ब्राह्मणपर्षाये निश्चयो उत्पन्नो। राजा पि ब्राह्मण्यो। एषा ब्राह्मणपरिषाय क्रिया अनुपरिवर्तितव्या। यदि ते ब्राह्मण्यं अपरित्यक्तं मालिनी परित्यजाहि। अथ ते मालिनी अपरित्यक्ता नास्ति ते ब्राह्मण्यं। ब्राह्मणपरिषाया क्रियामनुपरिवर्तन्तस्य तस्य राज्ञो एतदभूषि। इमा ब्राह्मणाक्रान्ता पृथिवी बहुब्राह्मण्या। यदि मालिनी न परित्यजिष्यामि डिम्बं भविष्यति। नैवं मालिनी भविष्यति नैवमहं।

त्यजेदेकं कुलस्यार्थं ग्रामार्थं तु कुलं त्यजेत्।
ग्राम जनपदस्यार्थं आत्मार्थं पृथिवी त्यजे ।।१।।

तेन दानि काशिराज्ञा मालिनी परित्यक्ता। यथा ब्राह्मणपरिषाये अभिप्रायं तथा भवतु। ते दानि ब्राह्मणा आहन्सु। यदि परित्यक्ता मालिनी आणा-

---

আসিয়া দেখিলেন যে, সহস্র সহস্র ব্রাহ্মণ (সেখানে) সমাগত হইয়াছেন। যেদিকে ব্রাহ্মণেরা ছিলেন, তিনি সেদিকেই গেলেন। ব্রাহ্মণগণ রাজার প্রত্যুদ্গমন করিয়া, 'জয় হউক' বলিয়া তাঁহার অভিনন্দন করিয়া, মালিনীর এই প্রকৃতি বা ব্যবহারের বিষয় সব কৃকি রাজার নিকট নিবেদন করিলেন—"মহারাজ, এই মালিনী ব্রাহ্মণদিগের কণ্টকস্বরূপ হইয়াছে, ব্রাহ্মণগণ রাজার নিত্য বা দৈবসিক আহার গ্রহণ করিতে পারিতেছেন না, মালিনী না যত-দিন ঘাতিত হয়। সমগ্র ব্রাহ্মণ পরিষদের এইরূপ নিশ্চয় বা সংকল্প উৎপন্ন হইয়াছে। রাজা (আপনিও) ব্রাহ্মণ্য বা ব্রাহ্মণানুরাগী। ব্রাহ্মণপরিষদের এই ক্রিয়া সংঘটিত করা কর্তব্য। যদি আপনার ব্রাহ্মণ্য বা ব্রাহ্মণানুরাগ পরিত্যক্ত না হয়, তবে মালিনীকে পরিত্যাগ করুন। আর যদি আপনি মালিনীকে অপরিত্যক্তা মনে করেন, তাহা হইলে আপনার ব্রাহ্মণ্য বা ব্রাহ্মণানুরাগ নাই"। ব্রাহ্মণপরিষদের এই সংকল্প ক্রিয়ায় পরিণত করিতে ইচ্ছা করিয়া রাজা ভাবিলেন—"এই পৃথিবী ব্রাহ্মণাক্রান্তা এবং ইহাতে (লোকেরও) অধিকতর ব্রাহ্মণপ্রীতি বর্তমান আছে। যদি মালিনীকে আমি পরিত্যাগ না করি, তবে (রাজ্যে) ডিম্ব বা উপপ্লব (সংক্ষোভ) উপস্থিত হইবে। এইরূপ ঘটিলে মালিনীও বাঁচিবে না, আমিও বাঁচিব না"।

কুলের রক্ষার্থ একজন ব্যক্তিকে ত্যাগ করা চলে, গ্রামের রক্ষার্থ কুলত্যাগ করা চলে; জনপদের রক্ষার্থ গ্রাম ত্যাগ করা চলে; এবং রাজার আত্মরক্ষার জন্য পৃথিবী ত্যাগ করা চলে॥ ১॥

ইদানীং সেই কাশিরাজকর্তৃক মালিনী পরিত্যক্ত হইল; (তিনি বলিলেন)—

पियनु राज्ञा। ततो तेन वाहिरे नगरातो ब्राह्मणाना मूले स्थितकेन दूतो प्रेपितो। आगच्छथ मालिनीमानेयत्ति। राजवचनेन दूतो राजकुलमनुप्राप्तः। आगच्छथ मालिनी परित्यक्तासि पितरि ब्राह्मणाना। ब्राह्मणेहि जीविताद्व्यपरोप्यसि। मालिनीये मातर आगत्वा आरावो मुक्तो सर्वेण च अन्तःपुरेण। नगरे सर्वजनो तेन आरावशब्देन उत्कण्ठितो आकुलीभूतो। महं आसि रोदनं।

(३११) मालिनी वाराणसीतो दूतेन निष्कास्यति पितुः सकाशं। सा दानि दूतेहि निष्कासिता पितु अल्लीपिता। इय महाराज मालिनी। राजा अश्रुकण्ठेन रुदन्मुखेन महतो जनकायस्य मालिनी ब्राह्मणाना दत्ता परित्यक्ता पितरे। सा दानि मालिनी यत्र काले पितरि परित्यक्ता ब्राह्मणानामाज्ञाकृता। तत. मालिनी प्रांजलीकृता ब्राह्मणपरिषाये प्रणिपतितत्वा। इच्छामि एकां प्रज्ञप्तिं ब्राह्मणपरिषा यदि प्रमाण ति। ते आहन्सु। जल्प या ते विज्ञप्ति। आह। अहं पितरि ब्राह्मणाना परित्यक्ता युष्माक अहं वशगता। ब्राह्मणपरिषाये एवमेव निश्चयो मालिनी मारेतव्या। तदिच्छामि

---

"ব্রাহ্মণপরিষদের যেরূপ অভিপ্রায়, সেরূপ হউক"। তখন সেই ব্রাহ্মণেরা বলিলেন—"যদি মালিনী (আপনার) পরিত্যক্তই হইয়া থাকে, তবে রাজা (আপনি) সেইরূপ আজ্ঞা জানাইয়া দিউন।" তৎপর তিনি (রাজা) নগরের বাহিরে ব্রাহ্মণগণের নিকটে থাকিয়াই (নগরাভ্যন্তরে) দূত পাঠাইলেন এবং বলিলেন—"এস, মালিনীকে (যাইয়া) আন (এখানে)"। রাজার বচনানুসারে দূত রাজকুলে গেলেন। "এস মালিনী, পিতাকর্তৃক ব্রাহ্মণদিগের হস্তে পরিত্যক্ত হইয়াছ। ব্রাহ্মণকর্তৃক তুমি জীবন হইতে ব্যপরোপিত (অর্থাৎ চ্যুত ঘাতিত) হইবে"। মালিনী মাতার নিকট গেলে পর, সর্ব অন্তঃপুরবাসী আরাব বা আর্তনাদ উত্থাপিত হইল। সেই চীৎকার শুনিয়া নগরে সকল লোকই উৎকণ্ঠিত ও আকুল হইয়া উঠিল। মহান্ রোদনধ্বনি উত্থিত হইল।

(৩১১) মালিনী বারাণসী হইতে দূতের সঙ্গে পিতার সকাশে যাইবার জন্য নিষ্কাসিত হইল। তৎপর দূতগণদ্বারা নিষ্কাসিত হইয়া তিনি পিতার সহিত সংলগ্ন হইয়া রহিল (এবং বলিল)—"মহারাজ, এই যে আমি মালিনী আসিয়াছি"। রাজা অশ্রুকণ্ঠে রোদন করিতে করিতে মহান্ জনসমূহের সম্মুখে ব্রাহ্মণদিগের হস্তে মালিনীকে প্রদান করিলেন—পিতা (তাহাকে) পরিত্যাগ করিলেন। তৎপর সেই মালিনী যে কালে পিতাদ্বারা পরিত্যক্ত হইল (তখন হইতেই) ব্রাহ্মণদিগের আজ্ঞাধীন হইল। ব্রাহ্মণপরিষদের নিকটে প্রণিপাত করিয়া প্রাঞ্জলি করিয়া তিনি (বলিলেন)—"আমি একটি প্রজ্ঞপ্তি বা নিবেদন বা প্রার্থনা করিতে ইচ্ছা করি, যদি ব্রাহ্মণপরিষৎ ইহা স্বীকার বা অনুমোদন করেন"। তাঁহারা বলিলেন—"যাহা তোমার বিজ্ঞাপনের বিষয় তাহা বল"। (মালিনী) বলিল—"আমি পিতাকর্তৃক ব্রাহ্মণগণের হস্তে পরিত্যক্ত হইয়াছি—(এখন) আমি আপনাদের বশগত। ব্রাহ্মণপরিষদের এইরূপই নিশ্চয় যে

ब्राह्मणपरिपायमेव सकाशातो सप्ताहं जीवितुं दानं दास्यामि पुण्यं च करिष्यामि। अहं च ब्राह्मणानां कृतोपस्थाना मयापि ब्राह्मणा उपस्थापिता पितुर्वचनेन। ततो मे सप्ताहस्यात्ययेन मारेथ यं वा वो क्षमति तं करोथ। तेषां ब्राह्मणानां महत्तरकानामुत्पन्नं। एवमेतं यथा मालिनी जल्पति चिरकालमेताये ब्राह्मणा उपस्थापिता पितुर्वचनेन भोजापिताः। पश्चा एताये पापकं चित्तमुत्पन्नं यं ब्राह्मणां मेल्लित्वा श्रमणानामभिप्रसन्ना। ततो नार्हति भूयो श्रमणानां दानं दातुं उत्सृष्टा न तेषां ब्राह्मणानामेव एषा सप्तरात्रं दानं दास्यति। तद्दीयतु एताय विज्ञप्तिः मुच्यते सप्तरात्रं सप्ताहस्यात्ययेन हनिष्यति। यं कारणं ब्राह्मणपरिपाये एष निश्चय उत्पन्नः तं मालिनीये जीवमानाय कार्यं। तस्या तेहि ब्राह्मणेहि दत्ता विज्ञप्तिः। सप्तरात्रमुत्सृष्टा महतो जनकायस्य ब्राह्मणानां सकाशातो अप्रमादा भवेया सप्तरात्रं पि न विलुपे त्ति। सा दानि ओसृष्टा समानापि नूनं सार्धं महता जनकायेन परिवृता पुनः राजकुलं प्रविष्टा पितरं

---

मालिनीर मारित हओया উচিত। ব্রাহ্মণপরিষদের সকাশে আমি এই প্রার্থনা করিতে ইচ্ছা করি যে আমি যেন এক সপ্তাহ কাল জীবিত থাকিতে পারি, (কারণ,) আমি দান কার্য সম্পাদন করিব এবং পুণ্যকার্য আচরণ করিব। আমি ব্রাহ্মণদিগের উপস্থান বা সেবা করিয়াই এবং পিতার বচনানুসারে ব্রাহ্মণগণ আমাদ্বারা উপস্থাপিত বা সেবিত হইয়াছেন। তাহার পবে, সপ্তাহ অতীত হইলে, আমাকে মারুন বা আপনারা যেরূপ করিতে ইচ্ছা করেন সেরূপ কিছু করিবেন"। সেই ব্রাহ্মণদিগের মধ্যে যাঁহারা মহত্তরক বা শ্রেষ্ঠ, তাঁহাদের মনে এই ভাব উৎপন্ন হইল—"মালিনী যাহা বলিল, তাহা ত ঠিক; সে-ত চিরকাল ব্রাহ্মণদিগকে সেবা করিয়াছে এবং পিতার কথানুসাবে তাঁহাদিগকে ভোজন করাইয়াছে। পশ্চাৎ তাহাব এক পাপ চিত্ত বা চিন্তা উৎপন্ন হইয়াছিল—এবং ব্রাহ্মণদিগকে ব্যাবর্তিত করিয়া (ছাড়িয়া দিয়া, তৎপ্রতি বিমুখ হইয়া) শ্রমণদিগের উপর অভিপ্রসন্ন হইয়াছ। উৎসৃষ্ট বা মোচিত হইয়া মালিনীর পক্ষে এখন আর শ্রমণদিগকে অধিক দান করা উচিত হইবে না, (তবে কি) এই ব্রাহ্মণদিগের জন্যই সপ্তরাত্র দান সে দিবে না? অতএব, তাহার বিজ্ঞপ্তি বা নিবেদন অনুমোদন করা হউক; সপ্তরাত্র তাহাকে মুক্ত রাখা হউক; সপ্তাহ অতিবাহিত হইলে তাহাকে বধ করা হইবে"। যে কারণে ব্রাহ্মণপরিষদের এই নিশ্চয় বা (মারণ) সংকল্প উৎপন্ন হইয়াছিল—সেই কারণই জীবমানা মালিনীর এখন সম্পাদ্যমান (অর্থাৎ শ্রমণদিগের সেবা)। সেই ব্রাহ্মণগণ তাহার আবেদন স্বীকার করিলেন। (তিনি ভাবিলেন)—"সপ্তরাত্র এই মহান্ ব্রাহ্মণদিগের হস্ত হইতে ছাড় পাইয়া আমি অপ্রমাদা (উদ্যুক্তা) হইব—যেন সাতরাত্রি বৃথা পার না হইয়া যায়"। তারপর সে (মালিনী) মুক্ত হইয়া মহান্ জনসংঘের সহিত পরিবৃতা হইয়া পুনর্বার রাজকুলে প্রবিষ্ট হইয়া পিতার

विज्ञापेति। इच्छामि इमानि सप्तदिवसानि दान च दातु पुण्य (३१२) च कर्तुं यत्र मम अभिप्रायो। राजा आह। एवमस्तु करोहि पुत्रि पुण्य यत्र ते अभिप्रायो। सा आह। भगवन्त काश्यप सम्यक्सवुद्ध सश्रावकसघ सप्ताहमिह राजकुले परिविषेय। राजा आह। अनुमोदाहि त्व। भगवा काश्यपो सश्रावकसघो राजकुले सप्ताह भक्तेन उपनिमन्त्रितो। अनुकम्पामुपादाय भगवता काश्यपेन वैनेयवशेन महाजनकाय विनयमागमिष्यतीति अधिवासित। ते ब्राह्मणा परिकुपिता इच्छन्ति हनितु जीवन्ती। मालिनी प्राजलीकृता। क्षमथ तावत् सप्ताह यावद्ददामि दान। ददन्तो ब्राह्मणा कामकारो व।

तायो प्रथमस्मि दिवसस्मि शास्ता भोजापितो सह गणेन अन्त पुरस्य मध्ये मातुश्च पितुश्च मध्यगताये। शास्ता च प्रसादनीया राज्ञो कथये कथा। विनीवरणे च धर्मे अभिसमेति राजा अन्त पुरेण सह। द्वितीयस्मि दिवसस्मि विनेसि पच पुत्रशता। तृतीयस्मि दिवसस्मि यो तेषामभूपि परिवारो च। चतुर्थस्मि दिवसे राजामात्या विनेति सबुद्ध। पचमे य च बलाग्र प्रथमफले निवेशये शास्ता।

---

নিকট নিবেদন করিল—"এই সাত দিন ব্যাপিয়া আমি দান সম্পাদন করিব ও পুণ্য (৩১২) কর্ম আচরণ করিব যেরূপ আমার অভিপ্রায়"। রাজা বলিলেন—"তাহাই হউক, হে পুত্রি, যাহাতে তোমার অভিপ্রায় সেই পুণ্যকর্মের আচরণ কর"। সে (মালিনী) বলিল—"আমি সশ্রাবকসংঘ সম্যক্‌সংবুদ্ধ ভগবান্ কাশ্যপকে সপ্তাহকাল এই রাজকুলে (আহার) পরিবেশন করাইব"। রাজা বলিলেন—"আনন্দের সহিত তাহাই কর"। সশ্রাবকসংঘ ভগবান্ কাশ্যপ সপ্তাহকাল রাজকুলে ভক্ত বা অন্নগ্রহণার্থ নিমন্ত্রিত হইলেন। ভগবান্ কাশ্যপ অনুকম্পা বা দয়া প্রদর্শন করিয়া বৈনেয়বশে অর্থাৎ বিনয় শিক্ষা দেওয়ার উদ্দেশ্যে—এই মহান্ জনকায় বিনয় প্রাপ্ত হইবে এই কারণে—নিমন্ত্রণ গ্রহণ করিলেন। সেই ব্রাহ্মণেরা পরিকুপিত হইয়া তাহাকে জীবন্ত অবস্থায় (তখনই) বধ করিতে ইচ্ছা করিলেন। মালিনী হাত জোড় করিল। "সপ্তাহ-কাল পর্যন্ত অপেক্ষা করুন—যাবৎ দানকর্ম সম্পাদন করিব। হে ব্রাহ্মণগণ দেহ দানশীল হউক—ইহা আপনাদের অভিপ্রেত ক্রিয়া"—(এইরূপ মালিনী বলিল)।

প্রথম দিবসে মালিনী অন্তঃপুরমধ্যে মাতা ও পিতার মধ্যগত হইয়া গণ বা সংঘ সহিত শাস্তা (কাশ্যপকে) ভোজন করাইল। শাস্তাও রাজাকে প্রসাদযুক্ত কথা (উপদেশ) বলিলেন। (কাশ্যপ হইতে) রাজা অন্তঃপুরস্থ পরিবার সহ বিনীবরণ বা বিঘ্নশূন্য ধর্মে অভিসমেত হইলেন (উপলব্ধি প্রাপ্ত হইলেন)। দ্বিতীয় দিবসে (কাশ্যপ রাজার) পাঁচ শত পুত্রকে বিনীত করিলেন (বিনয়ধর্মে দীক্ষা দিলেন)। তৃতীয় দিবসে যাহারা রাজার পরিবার বা পরিজন তাহাদিগকেও (তাহাই করিলেন)। চতুর্থ দিবসে সংবুদ্ধ (কাশ্যপ) রাজার অমাত্যদিগকে বিনয়ে দীক্ষা দিলেন। পঞ্চম দিবসে শাস্তা (কাশ্যপ) তাঁহার বলাগ্র বা শ্রেষ্ঠ সেনাকে প্রথম ফলে

पष्ठस्मि दिवसस्मिं च राजाचार्यं विनेति संबुद्धः। निगमां च सप्तमे श्रोतापत्तिफले विनये। राजापि हृष्टचित्तो संबुद्धं पश्यिय सह गणेन भगवन्तं काश्यपं निमन्त्रयेदग्रभक्तेन। मालिनीये सप्तमे दिवसे भगवन्तं काश्यपं भुक्ताविं विदित्वा अपनीतपात्रं प्रणिधानमुत्पादित। अनन्तरेणाह दुःखस्यान्तं करेयं। एदृशो मे पुत्रो भवेया यथायं भगवन्तो काश्यपो देवमनुष्याणां अर्थचर्या चरति। एवं मम पुत्रो अनुत्तरां सम्यक्संबोधिमभिसंबोधित्वा देवमनुष्याणामर्थचर्या चरतु। मा-(३१३)लिनीये भ्राता अनियवन्तो नाम कुमारो। तेनापि प्रणिहितं। एदृशो मे पिता भवेया यथायं भगवा काश्यपो एतरहि। तत्र च अह दुःखस्यान्तं करेय। एवं भगवता काश्यपेन कृकी च काशिराजा सान्त पुरो पंच कुमारशता अमात्या च भट्टबलाग्र योभूयेन च नैगमा सर्वे आर्यधर्मेहि विनीता। तेषामेतदभूषि। अस्माकं मालिनी कल्याणमित्रा मालिनीमागम्य अस्माकं सर्वधर्मेषु धर्मचक्षुर्विशुद्धं। ता ब्राह्मणा जीविताद्व्यपरोपयिष्यन्ति। अपि नाम वयं आत्मानं परित्यजेयाम। न मालिनी। तेहि तेषां ब्राह्मणानां संदिष्ट। एते

---

(স্রোতাপত্তি-ফল অর্থাৎ শুদ্ধির প্রথম স্তরে) নিবেশিত করিলেন। ষষ্ঠ দিবসে সংবুদ্ধ (কাশ্যপ) রাজাচার্যকে বিনয়ধর্মে দীক্ষা দিলেন। আবার সপ্তম দিবসে (তিনি) নিগমবাসীদিগকে (নগরজনদিগকে) স্রোতাপত্তিফলে বিনীত করিলেন। রাজাও সংবুদ্ধ (কাশ্যপকে) দেখিয়া হৃষ্টচিত্ত হইয়া গণ বা শ্রাবকসংঘ সহ ভগবান্ কাশ্যপকে শ্রেষ্ঠ ভক্ত বা অন্নভোজনে নিমন্ত্রণ করিলেন। সপ্তম দিবসে মালিনী ভগবান্ কাশ্যপকে কৃতভোজন ও অপনীত-ভোজনপাত্র বলিয়া জানিতে পারার পর, তাঁহার এই প্রণিধান বা দৃঢ় আকাঙ্ক্ষা এইরূপ উৎপন্ন হইল—"অনন্তরে (অর্থাৎ কালবিলম্ব না ঘটিয়া) আমি দুঃখের অন্ত বা অবসান যেন করিতে পারি। ভগবান্ কাশ্যপ যেমন, তেমন যেন আমার এক পুত্র হয় যে (তদ্রূপ) দেব ও মনুষ্যের জন্য অর্থচর্যা (হিতাচরণ) করিতে পারিবে। এইভাবে আমার পুত্র যেন অনুত্তর (অনুপম) সম্যক্‌সংবোধি লাভ করিয়া দেব ও মনুষ্যের জন্য অর্থচর্যা (হিতাচরণ) করিতে পারে"। মালিনীর (৩১৩) একটি ভ্রাতা ছিল অনিয়বন্ত-নামক কুমার। সে-ও প্রণিধান বা আকাঙ্ক্ষা করিল—"আমার যেন এতাদৃশ পিতা হয়েন, যিনি ভগবান্ কাশ্যপের ন্যায় হইবেন। এখনই এখানে আমি দুঃখের অন্ত বা অবসান যেন করিতে পারি"। এইভাবে ভগবান্ কাশ্যপকর্তৃক কাশিরাজ কৃকি, তাঁহার অন্তঃপুর (অর্থাৎ মহিষীরা), পাঁচ শত কুমার, অমাত্য ও ভট্টবল (সেনাভটেরা) এবং যাহারা ছিলেন নৈগম (বা নিগমবাসী=পুরবাসী)—তাঁহারা সকলেই আর্যধর্মে (সদ্ধর্মে) বিনীত হইলেন বা দীক্ষিত হইলেন। তাঁহাদের মনে এই ভাব উদিত হইল—"মালিনী আমাদের কল্যাণমিত্র (উপকারী বন্ধু), তাহাকে পাইয়া আমরা সর্বধর্মে (সর্ববস্তুবিষয়ে) বিশুদ্ধ ধর্মচক্ষু লাভ করিয়াছি। ব্রাহ্মণেরা তাহাকে জীবন হইতে ব্যপরোপিত করিতে (অর্থাৎ তাহার জীবন নাশ করিতে) উদ্যোগী হইয়াছেন। বরং আমরা নিজদিগের জীবন

वयं मालिनीये सह आगच्छाम: मालिनी अस्माकं कल्याणमित्रा न युष्मे शक्ता अस्मेहि जीवन्तेहि मालिनी जीविताद्व्यपरोपयितुं। यदा वयं सर्वे न भवाम एवं युष्मे शक्नोथ तां मालिनी जीविताद्व्यपरोपयितुं। ते दानि सपरिवारा: सबलवाहना: मालिनीमग्रतो कृत्वा वाराणसीतो निर्गम्य येन तानि ब्राह्मण-सहस्राणि तेन प्रणता। ते ब्राह्मणास्तं अनन्तं बलाग्रं दृष्ट्वा मालिनीये सह आगच्छन्तं भीता त्रस्ता। तेहि दूतो प्रेषितो राज्ञो च। निर्गम्यतु मुक्ता भवतु मालिनी तं दिवस या चैषा उद्धतदण्डा एषा पितरे आलोकं निसृष्टा भवतूद्धृतदण्डा। एषा न अस्माकं मालिनी अपराध्यति। काश्यपो अस्माकं सपरिवारो अपराध्यति तस्य वयं दण्डं करिष्याम:।

तेहि दानि सन्नद्धकवचिता: सहस्रयोगा दश पुरुषा ऋषिवदने प्रेषिता: काश्यपं श्रमणं सश्रावकसंघं जीविताद्व्यपरोपयथ। ते भगवता काश्यपेन मैत्र्या स्फारित्वा आर्यधर्मेहि प्रतिष्ठापिता। तेहि ब्राह्मणेहि अपरे विंश पुरुषा: सन्नद्धकवचिता: प्रेषिता: काश्यपं श्रमण जीविताद्व्यपरोपयथ। ते पुरुषा

---

ত্যাগ করিব, তথাপি মালিনীকে ত্যাগ করিতে পারিব না"। তাঁহারা সেই ব্রাহ্মণদিগকে এই কথা বলিয়া পাঠাইলেন—"এই আমরা মালিনীকে সঙ্গে লইয়া আসিতেছি। মালিনী আমাদের কল্যাণমিত্র—আমরা জীবিত থাকা কালে আমরা মালিনীকে জীবন-চ্যুত করিতে দিতে পারিব না। যখন আমরা সকলে বর্তমান থাকিব না তখন আপনারা সেই মালিনীকে জীবন হইতে চ্যুত বা বিযুক্ত করিতে পারিবেন"। তখন তাঁহারা সেনা ও বাহন সহ মালিনীকে অগ্রে লইয়া বারাণসী হইতে নির্গত হইয়া যেখানে সেই সহস্র সহস্র ব্রাহ্মণেরা বাস করিতেন সে-দিকে অগ্রসর হইলেন (যাইয়া পড়িলেন)। সেই ব্রাহ্মণেরা সেই অনন্ত বলাগ্র (সেনা) মালিনীর সঙ্গে আগমন করিতে দেখিয়া ভীত ও ত্রস্ত হইলেন। তাঁহারাও রাজার নিকট এই বলিয়া দূত পাঠাইলেন—"এই দিবসেই মালিনী চলিয়া যাউক, সে মুক্ত হইয়াছে—তাহার উপর প্রদত্ত দণ্ড উঠাইয়া নেওয়া হইল, সে এখন পিতার নয়নসমক্ষে প্রত্যর্পিত হইয়া উদ্ধৃতদণ্ডা হউক। এই মালিনী আমাদের নিকট কোন অপরাধ করে নাই। সপরিবার (পরিজন বা শ্রাবকসংঘ সহিত) কাশ্যপ আমাদের নিকট অপরাধ করিয়াছেন, তাঁহাকে আমরা দণ্ড প্রদান করিব"।

তখন সেই ব্রাহ্মণগণ সহস্র প্রকার (কপট) যোগব্যবহারী দশজন পুরুষকে সন্নদ্ধ ও কবচযুক্ত করিয়া ঋষিবদনে (ঋষিপত্তনে) পাঠাইলেন (এবং বলিলেন—) "তোমরা শ্রাবকসংঘ সহ শ্রমণ কাশ্যপকে জীবন হইতে বিচ্যুত কর"। তাহারা ভগবান্ কাশ্যপ-কর্তৃক মৈত্রীদ্বারা সম্প্লাবিত হইয়া আর্যধর্মে প্রতিষ্ঠাপিত হইল। সেই ব্রাহ্মণেরা অপর বিংশতি পুরুষকে সন্নদ্ধ ও কবচিত করিয়া পাঠাইলেন (এবং বলিলেন—) "তোমরা শ্রমণ কাশ্যপকে জীবন হইতে বিচ্যুত করিবে"। সন্নদ্ধ ও প্রহরণযুক্ত হইয়া তাহারা

ऋपिवदनं गता: सन्नद्धा: सप्रहरणा:। ते पि भगवता मैत्र्या स्फारित्वा आर्ये धर्मे प्रतिष्ठापिता.। एवं (३१४) त्रिंशच्चत्वारिश पचाशं यत्तका प्रेपिता तत्तका काश्यपेन भगवता मैत्र्याय स्फारित्वा आर्यधर्मेहि प्रतिष्ठापिता:। आकर्पणा एपा बुद्धाना। भगवता वैनेयसत्वानां आकर्पणतायै यत्तका तहि बुद्धवैनेया आसि तेहि ब्राह्मणसहस्रेहि तत्तका तेहि विसर्जिता: ते च भगवता सर्वे आर्यधर्मेहि विनीता:। मिथ्याप्रतिपन्ना अवशिष्टा अनेकप्राणसहस्रियो। तेपामार्यधर्मेहि विनीताना भवति। न एते ब्राह्मणा बुद्धमाहात्म्यं जानन्ति। यदि एते भगवन्त काश्यपमुपसंक्रमेन्सु: महता अर्थेन संयुज्येन्सु। तेहि तेपां ब्राह्मणानां दूतो प्रेपितो। भगवा काश्यपो सम्यक्संबुद्धो महात्मा महाकारुणिको लोकस्यानुग्रह-प्रवृत्तो। मा भवन्तो भगवतो काश्यपस्यान्तिके भिक्षुसंघस्य बाधितु प्रदूपेथ। एव मानं च मद च जहित्वा आगच्छथ सर्वे भगवतो काश्यपस्य पादवन्दनं महता अर्थेन सप्रयुज्यथ।

सत्य अपिशुनवर्णा न च अर्थवती शुची।
अन्येपा मधुरा व्यक्ता बुद्धस्य सखिला गिरा ॥१॥

---

ঋষিবদনে (ঋষিপত্তনে) গেল। তাহারাও ভগবান্ কর্তৃক মৈত্রীদ্বারা সঞ্চারিত হইয়া আর্যধর্মে প্রতিষ্ঠাপিত হইল। এইভাবে (৩১৪) ত্রিশ, চল্লিশ, পঞ্চাশ—যত জন পুরুষই প্রেরিত হইল তত জনই ভগবান্ কাশ্যপকর্তৃক মৈত্রীর সহিত সংযোজিত হইয়া আর্যধর্মে প্রতিষ্ঠাপিত হইল। বুদ্ধগণের এইরূপই আকর্ষণ বা আকর্ষণ শক্তি। বিনয়লাভের উপযুক্ত হওয়ায় (কাশ্যপের) আকর্ষণশক্তির প্রভাবে যত যত (ব্রাহ্মণ) সেখানে বুদ্ধের নিকট বিনয় শিক্ষার অধিকারী হইয়াছিলেন, সেই সহস্র সহস্র ব্রাহ্মণ-মধ্যে তাঁহারাই (ঋষিপত্তনে) প্রেরিত হইয়াছিলেন এবং তাঁহারাই সকলে ভগবান্ কর্তৃক আর্যধর্মে বিনীত হইয়াছিলেন। অবশিষ্ট অনেক সহস্র প্রাণী বা লোক মিথ্যাপ্রতিপন্ন অর্থাৎ মিথ্যাধর্মে যুক্ত রহিলেন। আর্যধর্মে বিনীত সেই (ব্রাহ্মণদিগের) মনে এই ভাব উদিত হইল—"এই ব্রাহ্মণগণ বুদ্ধের মাহাত্ম্য জানেন না। যদি তাঁহারা ভগবান্ কাশ্যপের নিকট উপস্থিত হয়েন তাহা হইলে মহান্ অর্থ বা প্রয়োজন সাধিত হইতে পারে (অর্থাৎ তাঁহারা প্রভূত লাভের সহিত সংযুক্ত হইতে পারিতেন)"। তাঁহারা সেই ব্রাহ্মণদিগের নিকট দূত পাঠাইলেন (এবং বলিলেন)—"সম্যক্সংবুদ্ধ ভগবান্ কাশ্যপ হইলেন মহাত্মা, মহাকারুণিক ও লোকের অনুগ্রহবিধানে প্রবৃত্ত। আপনারা কাশ্যপ ও (তদীয়) ভিক্ষুসংঘের নিকট তাঁহাদিগকে কোনরূপ বাধা বা কষ্ট প্রদানের জন্য দোষী বা অপরাধী হইবেন না। বরং মান (অভিমান) ও মদ (দর্প) পরিত্যাগ করিয়া আপনারা সকলে আসুন ও ভগবান্ কাশ্যপের পাদবন্দনা করিয়া মহান্ লাভের সহিত সংযুক্ত হউন"।

বুদ্ধের সমগ্র (সখিল=অখিল?) বাক্যাবলী সত্য, পিশুন বা দুষ্টভাবযুক্ত-বর্ণবিবর্জিত, অর্থসমন্বিত, শুচি বা শুদ্ধ, অন্যের কর্ণে সুমধুর, ও সুস্পষ্ট॥ ১॥

तर्पणीया निर्वम्हणी सर्वदाहविनाशनी ।
नेलवर्णा सुखवर्णा बुद्धस्य सखिला गिरा ॥२॥
अगद्गदा अविक्लवा अवितथा अनन्यथा ।
यथातथा अविकल्पिता बुद्धस्य सखिला गिरा ॥३॥
ज्ञेयज्ञाना अनुत्पन्ना अनोसाना असादिशा ।
नरवशा सुविभक्ता च वाचा अमितबुद्धिनो ॥४॥
सत्य चापिशुन च भाषति ।
स सर्वत पुन मैत्रचित्तो ।
(३१५) उपकारे परमार्थसहित
एत वा परम सुभाषित ॥५॥
आविष्ट गदित स भाषति
उच्चनीचमथापि मध्यम ।
अनुपद अन्वक्षर विशुद्ध
एत वा परम सुभाषित ॥६॥
परमकरुणमुदितयुक्ता
गिरा भाषति दशफलयुक्ता ।

---

বুদ্ধের সমগ্র বাক্যাবলী তৃপ্তিদায়ক সমাপ্তি গত সর্বপ্রকার দাহ বা দুঃখবিনাশী, নীলবর্ণবিশিষ্ট (নির্দোষ?) ও সুবর্ণসমন্বিত॥ ২॥

বুদ্ধের সমগ্র বাক্যাবলী গদ্গদরহিত (স্বরভঙ্গরহিত) বৈকল্যশূন্য অসত্যরহিত, অন্যথাভাবে অযুক্ত, যাথাতথ্যপূর্ণ ও বিকল্পশূন্য॥ ৩॥

যিনি অমিতবুদ্ধি (অর্থাৎ যাঁহার বুদ্ধির পরিমাণ করা যায় না) তাঁহার বাক্য জ্ঞেয়বস্তুর জ্ঞানসমন্বিত —ইহার উৎপত্তি বা আদি নাই ইহার অবসান বা অন্তও নাই, ইহার সাদৃশ্য বা তুলনা নাই ইহা নর বা মানুষকে বশে আনিতে সমর্থ, এবং ইহা সুন্দররূপে বিভাগযুক্ত (উপপত্তিমৎ)॥ ৪॥

তিনি কিন্তু মৈত্রচিত্ত হইয়া সত্য ও অপিশুন (অদুষ্ট) বাক্য বলেন, (৩১৫) তাঁহার এইরূপ পরম সুভাষিত (লোকের) উপকারার্থ পরমার্থসমন্বিত॥ ৫॥

তিনি (প্রয়োজনবোধে) উচ্চ নীচ ও মধ্যম ভাবে, আবিষ্ট (বা প্রভাবযুক্ত) ও গদিত বা নিষ্যন্দিত (অপর পাঠ—'গদিত') বাক্য বলেন তাঁহার এইরূপ পরম সুভাষিত অনুপদ (সদৃশ পদবিশিষ্ট) ও অন্বক্ষর (সদৃশ অক্ষরবিশিষ্ট) ও বিশুদ্ধ হইয়া থাকে॥ ৬॥

তিনি যে বাক্য বলেন তাহা পরমকরুণা ও পরমমুদিতা(আনন্দ)-যুক্ত এবং

अष्टांगुपेतचतुष्प्रकारं
एतं वा परमं सुभापितं ॥७॥
वाचां भाषति पंचपुण्यां
सुनिश्चितां वा पुन छिन्नसंशयां ।
न च कर्म किंचि करोति पापं
तथाविधं उत्तमपौरुपत्वं ॥८॥
एवं उपेतं वरलक्षणेहि
महाद्युतिगणमनुशासते ।
वरं ज्ञातीरतनं प्रहाय
रतिं च स्फीतां अभिनिष्क्रमे ॥९॥
अमृतपदं जिगीपुं नन्दजाता
द्रुमसारं वरगन्धमुत्तमं
लोचेत्वान कृतविकृतं तं
अथ तेनैव पचेसि ओदनं ॥१०॥
(३१६) एवमिह काश्यपं महर्षिं
परिभापन्ति जना परीत्तप्रज्ञाः ।
स्वाख्यातपदं अनिन्दितं
पुरुपाजानियमनतिक्रमं ॥११।

---

দশপ্রকার ফলসমন্বিত, অষ্টঅঙ্গদ্বারা উপেত ও চারিপ্রকার ভেদবিশিষ্ট। তাঁহার পরম সুভাষিত এইরূপই হইয়া থাকে॥ ৭॥

তিনি পঞ্চপুণ্যবিশিষ্ট, সুনিশ্চিত ও সংশয়চ্ছেদকারী বাক্য বলিয়া থাকেন। তথাবিধ উত্তমপুরুষ কোন প্রকার পাপকর্মের আচরণ করে না॥ ৮॥

এই প্রকার (উত্তমপুরুষ) শ্রেষ্ঠলক্ষণদ্বারা সমন্বিত হইয়া মহাদ্যুতিবিশিষ্ট গণ বা শিষ্যদিগকে অনুশাসিত করিয়া থাকেন (অর্থাৎ এইরূপ উত্তমপুরুষ শিষ্যদিগকে অনুশাসনদ্বারা উদ্বুদ্ধ করেন) এবং তিনি শ্রেষ্ঠ জ্ঞাতিরত্নসমূহ পরিত্যাগ করিয়া স্ফীত বা প্রবৃদ্ধ রতি (আনন্দ) অনুভব করার জন্য অভিনিষ্ক্রান্ত হয়েন॥ ৯॥

অমৃতপদ (বা নির্বাণ) প্রাপ্তির জন্য ইচ্ছুক, সেই বরগন্ধে উত্তম দ্রুমসাররূপী, তাঁহাকে (বুদ্ধকে) বিকৃত অবস্থাপ্রাপ্ত দেখিয়া নন্দজাতা বা নন্দের কন্যা তদর্থ ওদন পাক করিয়াছিলেন॥ ১০॥

**(৩১৬)** এইভাবে এই পৃথিবীতে যাহারা স্বল্প বা পরিমিতবুদ্ধ জন তাহারা অনতিক্রমশীল, (অমৃত)পদের সাক্ষাৎকারী, অনিন্দার ভাজন, সম্ভ্রান্ত পুরুষ মহর্ষি কাশ্যপকে নিন্দা করিয়া থাকে॥ ১১॥

अमितार्वि प्रहाय पुण्यपापं
भवसंयोजनसंक्षये रतं ।
शान्तं सुविभक्तमानसं
तं जनो गरहति अनंगनं ॥१२॥
भिक्षू च उपासका इमे
वहु काश्यपशासने रता ।
ज्वलितं व हुताशनं शिखिं
एथ वन्दाम समेत्य काश्यपं ॥१३॥
एषो द्विपदानमुत्तमो
सो चक्षुददो विनायको ।
मानं च मदं च विप्रहा
एथ वन्दाम समेत्य काश्यपं ॥१४ ॥

ते ब्राह्मणा सर्वे नित्यत्वनियतराशी बुद्धसहस्रमपि यदि धर्मं देशेय अभव्या ते धर्ममाजानितुं बुद्धे च धर्मे च संघे च प्रसादयितु । ते दानि दण्डलगुडहस्ता येन भगवान् काश्यपो ते प्रधाविता । भगवता पृथिवीदेवता आभाष्टा । सा दानि तालमात्रेण आत्मभावेन भगवतो पुरतो स्थिता । भगवा तां पृथिवी-

---

যিনি (কাশ্যপ) অনঙ্গন (অঙ্গনার বা স্ত্রীলোকের প্রতি অনাসক্ত; অথবা, নিষ্পাপ), পাপ ও পুণ্য ত্যাগ করিয়া নিরুদ্বেগ বা শান্তিপ্রাপ্ত, ভবসংযোজনের সংক্ষয়ে আনন্দিত, শান্ত ও সুসংযতমনাঃ তাঁহাকে (সাধারণ) জনেরা গর্হা বা নিন্দা করিয়া থাকে॥ ১২॥

কাশ্যপের (ধর্ম-) শাসনে অত্যধিক আনন্দিত এই সকল ভিক্ষু ও উপাসক (আমরা) এস একত্রিত হইয়া শিখাযুক্ত হুতাশনের ন্যায় জ্বলিত এই কাশ্যপের বন্দনা করি॥ ১৩॥

তিনি (কাশ্যপ) দ্বিপদ (মানুষগণের) মধ্যে উত্তম, চক্ষুর্দানকারী ও বিনায়ক (বিনয়বিধানকারী)। আমরা মান ও মদ বা গর্ব ত্যাগ করিয়া একত্রিত হইয়া কাশ্যপকে বন্দনা করি॥ ১৪॥

এই ব্রাহ্মণেরা সকলেই মিথ্যাত্বে ('নিত্যত্ব' পাঠ অসঙ্গত বলিয়া প্রতিভাত হয়) নিয়ত ব্যক্তিগণের রাশি বা দলভুক্ত—তাঁহারা বুদ্ধসহস্রদ্বারা ধর্মবিষয়ে উপদিষ্ট হইলেও ধর্ম সম্যক্ বুঝিতে এবং বুদ্ধ, ধর্ম ও সংঘে শ্রদ্ধা প্রদর্শন করিতে অপারগ হইবেন। দণ্ড ও লগুড়হস্ত হইয়া তাঁহারা তখন যেদিকে ভগবান্ কাশ্যপ ছিলেন সেদিকে প্রধাবিত হইলেন। ভগবান্ পৃথিবী-দেবতাকে আহ্বান করিলেন। তিনি (পৃথিবী) তখন তালবৃক্ষের মত আত্মভাব বা স্বরূপ অবলম্বন করিয়া ভগবানের

देवतामाह। के च ते तत्र ब्राह्मणा भवन्ति। सा दानि आह। एते मम पृथिवीनिसृता दासा। भगवानाह। तेन हि यथा दासा पराक्रम्यन्ते तथा पराक्रम। सा दानि महान्तं (३१७) तालस्कन्धमुन्मूलेत्वा येन ते ब्राह्मणा तेन प्रत्युद्गता। त तालस्कन्धं पृथिवीये छटाछटाये उपरिपतित। ते ब्राह्मणा भीता नाशनष्टाः।

इति श्रीमहावस्तुअवदाने मालिनीये वस्तु समाप्तं।

एव मया श्रुत एकस्मि समये भगवां कोशलेपु चारिकां चरमाणो महता भिक्षुसघेन सार्ध पञ्चहि भिक्षुशतेहि येन कोशलाना मारकरण्डो निगमो तदवसारि तदनुप्राप्तो तत्रैव विहरति अन्यतरस्मि वनपण्डे। अथ खलु भगवान् सायाह्नकाल समये प्रतिसलयनाद्व्युत्थाय विहारातो निर्गम्य ऊर्ध्वं च उल्लोकेत्वा दिशाभागा च अभिविलोकेत्वा अधो च ओलोकेत्वा समं च भूमिभागं समवेक्षित्वा स्मितं प्रादुष्करित्वा दीर्घं चङ्कम चङ्कमे। अद्राक्षीत् अथ खल्वायुष्मानानन्दो भगवन्त सायाह्नकालसमये प्रतिसंलयनाद्व्युत्थाय ऊर्ध्वं च उल्लोकेत्वा दिशाभागां च अभिविलोकेत्वा अधो च ओलोकेत्वा सम च भूमिभाग समवेक्षित्वा स्मितं प्रादुष्क-

---

সম্মুখে দাঁড়াইলেন। ভগবান্ সেই পৃথিবী-দেবতাকে বলিলেন—"সেখানে তাঁহারা কোন্ ব্রাহ্মণগণ উপস্থিত হইয়াছেন"? তিনি (পৃথিবী) তখন বলিলেন—"ইঁহারা আমার পৃথিবীসংলগ্ন দাস"। ভগবান্ বলিলেন—"তাহা হইলে যেভাবে দাসগণ পরাক্রান্ত বা অভিযুক্ত হওয়ার যোগ্য, সে-ভাবে তাহাদের উপর পরাক্রম বা অভিযোগ প্রদর্শন কর"। তখন তিনি (পৃথিবী-দেবতা) একটি বৃহৎ (৩১৭) তালবৃক্ষস্কন্ধ উন্মূলিত করিয়া যে-দিকে ব্রাহ্মণগণ ছিলেন সে-দিকে অগ্রসর হইয়া চলিলেন। সেই তালস্কন্ধ তখন পৃথিবীর বা ভূমির উপরে ছটায় (ছড়ায়) ছটায় (ছড়ায়) করিয়া মারিতে লাগিলেন। সেই ব্রাহ্মণেরা ভীত অবস্থায় একেবারে অদৃশ্য হইলেন বা পলাইয়া গেলেন।

ইতি মহাবস্তু-অবদানে মালিনীর বস্তু বা উপাখ্যান সমাপ্ত।

### ঘটিকার ও জ্যোতিপাল

এইপ্রকার আমি শুনিয়াছি। একসময়ে ভগবান্ কোশলদেশে চারিকা বা ভ্রমণ করিতে করিতে পাঁচশত ভিক্ষুর একটি মহান্ ভিক্ষুসংঘসহ যে-দিকে কোশলদেশের মারকরণ্ড-নামক নিগম বা নগর অবস্থিত ছিল, সে দিকে অবসৃত হইয়া (অগ্রসর হইয়া) সেখানে উপস্থিত হইলেন এবং সেখানেই অন্যতর বনষণ্ডে (বনরাজীতে) বিহার করিতেছিলেন। অনন্তর (একদিন) তিনি সায়াহ্নকালে তাঁহার প্রতিসংলয়ন বা একান্তবাস (নিভৃত বা বিবিক্ত দেশে অবস্থান) হইতে উঠিয়া, বিহার হইতে নির্গত হইলেন এবং ঊর্ধ্বদিকে উল্লোকন করিয়া, দিগ্‌বিভাগের দিকে দৃষ্টিক্ষেপ করিয়া ও অধোদেশে

रित्वा दीर्घं चक्रम चक्रमन्त। दृष्ट्वा पुनर्येन सवहुला भिक्षवस्तेनोपसक्रमित्वा भिक्षूनेतदवोचत्। एषो वुद्धो भगवान् सायाह्नसमये प्रतिसलयनाद् व्युत्थाय ऊर्ध्व च उल्लोकेत्वा दिशाभागा च अभिविलोकेत्वा अधो च अवलोकेत्वा सम भूमिभाग समवेक्षित्वा स्मित च प्रादुष्करित्वा दीर्घं चक्रम चक्रमति। न च पुनरावुसावो तथागता अर्हन्त सम्यक्सवुद्धा अहेतु अप्रत्यय स्मित प्रादुष्कुर्वन्ति। किं पुनर्वय आवुसावो येन भगवास्तेनोपसक्रमित्वा भगवन्तमेतमर्थं पृच्छेम। यथा त भगवा व्याकरिष्यति तथा त धारयिष्याम। साध्वायुष्मन्निति ते भिक्षू आयुष्मतो आनन्दस्य प्रत्यश्रोषि।

अथ खलु आयुष्मानानन्दो तेहि भिक्षुहि सार्धं येन भगवास्तेनोपसक्रमित्वा भगवत पादौ शिरसा वन्दित्वा एकान्ते अस्थासि। एकान्ते स्थित आयुष्माना-(३१८)नन्दो भगवन्तमेतदवोचत्। इहाह भगवन्त अद्दशामि सायाह्नसमये प्रतिसलयनाद् व्युत्थाय विहाराभिष्क्रम्य ऊर्ध्वं च उल्लोकेत्वा अधो च अवलोकेत्वा दिशाभागा च अभिविलोकेत्वा सम च भूमिभाग समवेक्षित्वा स्मित च प्रादुष्कुर्वन्त दीर्घं चक्रम चक्रमन्त। न च पुनस्तथागता अर्हन्त सम्यक्सबुद्धा अहेतु अप्रत्यय स्मित प्रादुष्करोन्ति। को भगवन् हेतु क प्रत्यय स्मितस्य

---

অবলোকন করিয়া সম ভূমিভাগের দিকে আবেক্ষণপূর্বক স্মিত বা হাসি প্রকাশ করিতে করিতে দীর্ঘ পরিক্রমণ করিতে লাগিলেন। অনন্তর আয়ুষ্মান্ আনন্দ ভগবানকে সায়াহ্নকালে তাঁহার প্রতিসংলয়ন বা একান্তবাস হইতে উঠিয়া পরিক্রমণ করিতে দেখিলেন। ইহা দেখিয়া যে দিকে বহুসংখ্যক ভিক্ষুরা ছিলেন সে দিকে উপসংক্রান্ত হইয়া (তিনি) ভিক্ষুদিগকে এইকথা বলিলেন—"এই ভগবান্ বুদ্ধ সায়াহ্নসময়ে তাঁহার প্রতিসংলয়ন বা একান্তবাস হইতে উঠিয়া দীর্ঘ চংক্রম বা পরিক্রমণ করিতেছেন। হে আয়ুষ্মানেরা (ভ্রাতৃগণ)! তথাগতগণ অর্হদ্‌গণ ও সম্যক্‌সংবুদ্ধগণ অহেতুক ও বিনা প্রত্যয় বা কারণে কখনই স্মিত বা হাসি আবিষ্কার করেন না। হে ভ্রাতৃগণ, তবে কি আমরা যে দিকে ভগবান্ রহিয়াছেন সে দিকে উপসংক্রান্ত হইয়া ভগবানকে এই বিষয়টা জিজ্ঞাসা করিব? ভগবান্ যে প্রকার ব্যাকরণ বা ব্যাখ্যা করিবেন সে প্রকারই আমরা ধারণা করিব"। সেই ভিক্ষুগণ 'সাধু, আয়ুষ্মান' বলিয়া আয়ুষ্মান্ আনন্দের কথা স্বীকার করিলেন।

অনন্তর আয়ুষ্মান্ আনন্দ সেই ভিক্ষুগণকে সঙ্গে লইয়া যে দিকে ভগবান্ ছিলেন সে দিকে উপসংক্রান্ত হইয়া ভগবানের পাদবন্দনা করিয়া একান্তে বা একদিকে দাঁড়াইয়া রহিলেন। একান্তে স্থিত আয়ুষ্মান্ (৩১৮) আনন্দ ভগবানকে এইরূপ বলিলেন—"এইখানে আমি ভগবানকে সায়াহ্নসময়ে (আপনার) প্রতিসংলয়ন বা একান্তবাস হইতে উঠিয়া হাসি প্রকাশ করিতে করিতে দীর্ঘ পরিক্রমণ করিতে দেখিতে পাইয়াছি। কিন্তু তথাগতগণ অর্হদ্‌গণ ও সংবুদ্ধগণ অহেতুক ও বিনা কারণে হাসি

प्रादुष्करणाय। एवमुक्ते भगवानायुष्मन्तमानन्दमेतदुवाच। पश्यसि त्वं च आनन्द एतं पृथिवीप्रदेशं। एवं ह्येतं भगवन्। एतस्मि आनन्द पृथिवीप्रदेशे भगवतो काश्यपस्य आगमवस्तुं अभूषि। पश्यसि त्वमानन्द एतं पृथिवीप्रदेशं। एवं ह्येतं भगवन्। एतस्मिन्नानन्द पृथिवीप्रदेशे भगवतो काश्यपस्य कुटीवस्तु अभूषि। पश्यसि त्वमानन्द एतं पृथिवीप्रदेशं। एवं ह्येतद् भगवं। एतस्मिन्नानन्द पृथिवीप्रदेशे भगवतो काश्यपस्य चंक्रमपष्टि: अभूषि। पश्यसि त्वमानन्द एतं पृथिवीप्रदेशं। एवं ह्येतत् भगवं। एतस्मिन्नानन्द पृथिवीप्रदेशे त्रयाणां तथागतानामर्हतां सम्यक्संबुद्धानां निषद्या अभूषि भगवतो क्रकुच्छन्दस्य भगवतो च कनकमुनिस्य भगवतो च काश्यपस्य। अथ खल्वायुष्मानानन्दो अ (आ)श्चर्याद्भुतसंविग्नरोमहृष्टजातो शीघ्रंशीघ्रं त्वरमाणरूपो येन सो पृथिवीप्रदेशो तेनोपसंक्रमित्वा तस्मि पृथिवीप्रदेशे चतुर्गुणसंघाटिं प्रज्ञपेत्वा येन भगवां तेनांजलिं प्रणामेत्वा भगवन्तमेतदवोचत्। इह भगवां निषीदतु प्रज्ञप्त एव आसने। अयं पृथिवीप्रदेशो चतुर्हि तथागतेहि अर्हन्तेहि सम्यक्संबुद्धेहि परिभुक्तो भविष्यति

---

আবিষ্কার করেন না। আপনার এই হাসি প্রকাশের কি হেতু, কি প্রত্যয় বা কারণ"? ইহা উক্ত হইলে পর, ভগবান্ আয়ুষ্মান্ আনন্দকে এই কথা বলিলেন—"হে আনন্দ, তুমি এই পৃথিবীপ্রদেশ বা ভূমিখণ্ড দেখিতে পাইতেছ কি?" "হে ভগবান্, ইহা এইরূপ দেখিতেছি"। "হে আনন্দ, এই ভূমিখণ্ডে ভগবান্ কাশ্যপের আগমবস্তু (উৎপত্তিস্থান; মতান্তরে, 'আরাম-বস্তু' পাঠ) ছিল। "হে আনন্দ, তুমি ঐ ভূমিখণ্ড দেখিতে পাইতেছ কি"? "হে ভগবান্, হ্যাঁ ইহা এইরূপ দেখিতেছি"। "হে আনন্দ, এই পৃথিবীপ্রদেশে ভগবান্ কাশ্যপের কুটীবস্থান ছিল। হে আনন্দ, তুমি এই পৃথিবীপ্রদেশ দেখিতেছ কি"? "হে ভগবান্, ইহা এইরূপ দেখিতেছি।" "হে আনন্দ, এই ভূমিখণ্ডে ভগবান্ কাশ্যপের চংক্রমণস্থান (পরিক্রমণ বা পায়চারি করবার স্থান; 'চংক্রম-ষষ্টি'-পাঠটি অসংবদ্ধ বলিয়া বিবেচিত হয়, 'চংক্রম-যষ্টি'-পাঠ হইতে পারে কি? কেহ কেহ 'চংক্রম-ভূমি' বা 'চংক্রম-শালা' পাঠও হইতে পারে বলিয়া মনে করেন) ছিল। হে আনন্দ, তুমি এই পৃথিবীপ্রদেশ দেখিতেছ কি?" "হে ভগবন্, ইহা এইরূপ দেখিতেছি"। "হে আনন্দ, এই পৃথিবীপ্রদেশে তিনটি তথাগত, অর্হৎ ও সম্যক্সংবুদ্ধের—যথা ভগবান্ ক্রকুচ্ছন্দ, ভগবান্ কনকমুনি ও ভগবান্ কাশ্যপের—নিষদ্যা বা বসিবার স্থান ছিল।" তৎপর আয়ুষ্মান্ আনন্দ আশ্চর্যান্বিত, অদ্ভুতাবিষ্ট, সংবেগপূর্ণ ও হৃষ্টরোমা হইয়া শীঘ্র শীঘ্র ত্বরান্বিত অবস্থায় যে-দিকে সেই ভূমিখণ্ড সে-দিকে উপসংক্রান্ত হইয়া সেই ভূমিখণ্ডে নিজ সংঘাটি বা উপরিতন বস্ত্র চারি ভাজে রচনা করিয়া যে-দিকে ভগবান্ ছিলেন সে-দিকে অঞ্জলি বদ্ধ করিয়া প্রণামপূর্বক ভগবানকে এই কথা বলিতে লাগিলেন—"এই স্থানে রচিত বা নির্মিত আসনে আপনি উপবেশন করুন। (তাহা হইলে) এই ভূমিখণ্ড চারিটি তথাগত অর্হৎ ও সম্যক্সম্বুদ্ধদ্বারা পরিভুক্ত হইবে—

भगवता ऋकुच्छन्देन भगवता च कनकमुनिना भगवता च काश्यपेन भगवता चैर्तांहि। निषीदतु खलु भगवा प्रज्ञप्त एव आसने। आयुष्मां पि आनन्दो भगवतः पादौ (३१६) शिरसा वन्दित्वा एकान्ते निषीदि। ते पि भिक्षू भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषीदेन्सुः। एकान्ते निषण्णमायुष्मन्तमानन्दं भगवानेतदवोचत्। इच्छसि पुनस्त्वमानन्द तथागतस्य पूर्वनिवाससंयुक्तां धर्मीकथां भाषतो श्रोतुं इममेव मारकरण्डं निगममारभ्य। एवमुक्ते आयुष्मानानन्दो भगवन्तमेतवोचत्। एतस्य दानि भगवं कालो एतस्य दानि सुगत समयो यं भगवा भिक्षूणामेतमर्थं भाषे। भिक्षू भगवतो संमुखा श्रुत्वा संमुखा प्रगृहीत्वा तथत्वाये धारयिष्यन्ति। एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्।

भूतपूर्वमानन्द भगवति काश्यपे अयं मारकरण्डो निगमो वेरुडिङ्गो नाम ब्राह्मणग्रामो अभूषि। वेरुडिङ्गे खलु आनन्द ब्राह्मणग्रामे घटिकारो नाम कुम्भकारो अभूषि भगवतो काश्यपस्य उपस्थायको। घटिकारस्य खलु पुनरानन्द कुम्भकारस्य ज्योतिपालो नाम माणवको अभूषि दारकवयस्यको सहपांशुक्रीड़नको प्रियो मनापो अजन्यस्य ब्राह्मणस्य पुत्रो। अथ खल्वानन्द भगवां काश्यपो

---

ভগবান্ ক্রকুচ্ছন্দ, ভগবান্ কনকমুনি, ভগবান্ কাশ্যপ ও সম্প্রতি ভগবান্ আপনি—(এই চারিজন দ্বারা)। অতএব, ভগবান্ (আপনি) এই রচিত বা প্রস্তুত আসনে উপবেশন করুন"। আয়ুষ্মান্ আনন্দও ভগবানের পাদদ্বয় (৩১৯) মস্তকদ্বারা বন্দনা করিয়া একান্তে উপবেশন করিলেন। সেই ভিক্ষুরাও ভগবানের পাদদ্বয় মস্তকদ্বারা বন্দনা করিয়া একপার্শ্বে উপবিষ্ট হইলেন। একান্তে উপবিষ্ট আয়ুষ্মান্ আনন্দকে ভগবান্ এই কথা বলিলেন—"হে আনন্দ, এই মারকণ্ড-নামক নিগমসম্পর্কিত তদীয় পূর্বনিবাস বা পূর্বজন্ম-সম্বন্ধিনী (একটি) ধর্মকথা তথাগত (এখন) বলিলে, তুমি কি ইহা শ্রবণ করিতে ইচ্ছা কর?" এই কথা উক্ত হইলে, আয়ুষ্মান্ আনন্দ ভগবানকে এই কথা বলিলেন—"হে ভগবন্, এখনই ইহার (এই কথার) কাল। "হে সুগত, এখনই ইহার সময় (অবসর) যে, ভগবান্ (আপনি) ভিক্ষুগণের প্রয়োজনে এই বিষয় বলিতে চাহিতেছেন। ভিক্ষুগণ (এই উপদেশ) ভগবানের প্রমুখাৎ শুনিয়া, তাঁহার মুখ হইতেই ইহা সমাদরে গ্রহণ করিয়া, ইহার তত্ত্ব বা তথতা বা তথ্য ধারণ করিতে পারিবেন"। এইরূপ বলা হইলে পর, ভগবান্ আয়ুষ্মান্ আনন্দকে এই কথা বলিলেন —

হে আনন্দ, বহুকাল পূর্বে ভগবান্ কাশ্যপের (সময়ে), এই মারকরণ্ড নিগমের নাম ছিল ব্রাহ্মণগ্রাম বেরুডিঙ্গ। হে আনন্দ, (সেই) ব্রাহ্মণগ্রামে ভগবান্ কাশ্যপের উপস্থায়ক বা সেবাকারী ঘটিকার-নামক এক কুম্ভকার ছিল। আবার কুম্ভকার ঘটিকারের জ্যোতিপাল-নামক এক (মাণবক) যুবক বাল্যবন্ধু ছিল;—এই প্রিয় ও মনাপ বা চিত্তাকর্ষক ধূলিখেলার সাথী (জ্যোতিপাল) উচ্চকুলসম্ভূত ব্রাহ্মণের পুত্র

कोशलेपु चारिकां चरमाणो महता भिक्षुसंघेन सार्ध्वं सप्तहि भिक्षुसहस्रेहि येन कोशलानां वेरुडिङ्गो ब्राह्मणग्रामो तदवसारि तदनुप्राप्तः तत्रैव विहरति इमस्मि एव वनखण्डे। अश्रोपि खल्वानन्द घटिकारो कुम्भकारो, भगवा किल काश्यपो कोशलेपु चारिकां चरमाणो येन कोशलानां वेरुडिङ्गो ब्राह्मणग्रामं तदवसारि तदनुप्राप्तो तत्रैव विहरति अन्यतरस्मि वनखण्डे। अथ खल्वानन्द घटिकारो कुम्भकारो येन ज्योतिपालो माणवो तेनुपसंक्रमित्वा ज्योतिपालं माणवमेतद-वोचत्। श्रुतमिदं सम्यग् ज्योतिपाल। भगवां किल काश्यपो कोशलेपु चारिकां चरमाणो महता भिक्षुसघेन सार्ध सप्तहि भिक्षुसहस्रेहि येन कोशलाना वेरुडिङ्गो ब्राह्मणग्रामो तदवसारि तद-(३२०)नुप्राप्त' तत्रैव विहरति अन्यतरस्मि वनखण्डे। कि पुनर्वयं सम्यक् ज्योतिपाल येन भगवा काश्यपो तनोपसंक्रमेम भगवन्तं काश्यप दर्शनाये वन्दनाये पर्युपासनाये। एवमुक्ते ज्योतिपालो माणवो घटिकारं कुम्भकारेमेतदवोचत्। किं मे भणे घटिकार तेहि मुण्डिकेहि श्रमणेहि दर्शनाये उपसंक्रान्तेहि पर्युपासनाये। द्वितीयं तृतीयं पि आनन्द घटिकारो कुम्भकारो ज्योतिपालं माणवमेतदुवाच।.....किं मे भणे घटिकार तेहि मुण्डेहि श्रमणेहि दर्शनाये उपसंक्रान्तेहि पर्युपासनाये।

---

ছিল। এখন, হে আনন্দ, ভগবান্ কাশ্যপ কোশলদেশে মহান্ ভিক্ষুসংঘের সাত সহস্র ভিক্ষু সহ ভ্রমণ করিতে করিতে যে-দিকে কোশলদেশের বেরুডিঙ্গ ব্রাহ্মণগ্রাম সে-দিকে অগ্রসর হইয়া, ইহাতে উপস্থিত হইয়া, সেখানে এই বনখণ্ডেই বিহার করিতেছিলেন। তৎপর হে আনন্দ, কুম্ভকার ঘটিকার শুনিতে পাইল যে ভগবান্ কাশ্যপ....... ... সেখানেই কোন একটি বনখণ্ডে বিহার করিতেছেন। অনন্তর, হে আনন্দ, কুম্ভকার ঘটিকার যে-দিকে মাণব (যুবক) জ্যোতিপাল ছিল, সে-দিকে উপ-সংক্রান্ত হইয়া মাণব জ্যোতিপালকে এই কথা বলিল—"হে জ্যোতিপাল, আমি সম্যক্ (ঠিক) শুনিয়াছি যে, ভগবান্ কাশ্যপ কোশলদেশে যে-দিকে কোশলদেশের বেরুডিঙ্গ ব্রাহ্মণগ্রাম ছিল সে-দিকে অগ্রসর হইয়া, ইহাতে উপস্থিত হইয়া (৩২০) সেখানেই কোন একটি বনখণ্ডে বিহার করিতেছেন। হে সৌম্য, (ভদ্র='সম্যক্' পাঠ) জ্যোতিপাল, ইহাতে কি হয় যদি আমরা যে-দিকে ভগবান্ কাশ্যপ আছেন সে-দিকে উপসংক্রমণ করিয়া ভগবান্ কাশ্যপকে দর্শন, বন্দন ও পর্যুপাসন করি? এইরূপ উক্ত হইলে পর, মাণব জ্যোতিপাল কুম্ভকার ঘটিকারকে এই কথা বলিল—"হে ঘটিকার, আমি বলি সেই মুণ্ডক (মুণ্ডিত-মস্তক) শ্রমণদিগকে দর্শন ও পর্যুপাসন করিবার জন্য তাঁহাদের নিকট আমার উপসংক্রমণের প্রয়োজন কি? হে আনন্দ, দ্বিতীয়, তৃতীয় বার কুম্ভকার ঘটিকার মাণব জ্যোতিপালকে এই কথা বলিল। [এখানে খানিকটা পাঠ পাওয়া যায় নাই]। (সে-ও বলিল—) "হে ঘটিকার, আমি বলি সেই মুণ্ডক......... ..প্রয়োজন কি?"

अथ खल्वानन्द घटिकारस्य कुम्भकारस्य एतदभूषि। को नु खलु स्यादुपायो यं ज्योतिपालो माणवो भगवन्तं काश्यपं दर्शनाय उपसंक्रमेय पर्युपासनाय। अथ खल्वानन्द घटिकारस्य कुम्भकारस्य एतदभूषि। अस्ति खलु तस्यैव वनखण्डस्य अविदूरे सुमुका नाम पुष्करिणी यं नूनाहं ज्योतिपालेन माणवेन सार्धं येन सुमुका नाम पुष्करिणी गच्छेयं शीर्षस्नापनाय। अथ खल्वानन्द घटिकारो कुम्भकारो येन ज्योतिपालो माणवो तेनुसंक्रमित्वा ज्योतिपालं माणवमेतदुवाच। किं पुनर्वयं सम्यग् ज्योतिपाल येन सुमुका नाम पुष्करिणी तेनोपसंक्रमेम शीर्षस्नापनाय। एवमुक्ते आनन्द ज्योतिपालो माणवो घटिकारं कुम्भकारमेतदुवाच। तेन हि भणे घटिकार सुखी भव यस्येदानि कालं मन्यसे। अथ खल्वानन्द घटिकारो कुम्भकारो शीर्षस्नानीयशाटिमादाय ज्योतिपालेन माणवेन सार्धं येन सा पुष्करिणी तेनोपसंक्रमेनुसु स्नानाय। अथ खल्वानन्द ज्योतिपालो माणवो शीर्षस्नातो उदकतीरे अस्थासि केशा सन्थापयमानो। अथ खल्वानन्द घटिकारो कुम्भकारो ज्योतिपालं माणवमेतदवोचत्। अयं सम्यग् ज्योतिपाल भगवा काश्यपो इमस्मिं येव वनखण्डे कि पुनर्वयं सम्यग् ज्योतिपाल येन भगवा काश्यपो तेनुपसंक्रमेम भगवन्तं काश्यपं

---

তৎপর হে আনন্দ, কুম্ভকার ঘটিকারের মনে এই ভাব উদিত হইল—"কি উপায় অবলম্বিত হইতে পারে যদ্দ্বারা মাণব জ্যোতিপাল ভগবান্ কাশ্যপের দর্শন ও পর্যুপাসনের জন্য তাঁহার নিকট উপসংক্রমণ করিবে?" অনন্তর, হে আনন্দ, কুম্ভকার ঘটিকারের মনে হইল—"সেই বনখণ্ডেরই অবিদূরে সুমুকা-নামে এক পুষ্করিণী আছে; কেন আমি মাণব জ্যোতিপালকে সঙ্গে লইয়া যে-দিকে সুমুকা নামে পুষ্করিণী আছে সে-দিকে শীর্ষস্নাপনের (মাথা ডুবাইয়া স্নান করার) জন্য যাই না?" অনন্তর কুম্ভকার ঘটিকার যে-দিকে মাণব জ্যোতিপাল ছিল সে-দিকে উপসংক্রমণ করিয়া মাণব জ্যোতিপালকে এই কথা বলিল—"হে সৌম্য (ভদ্র, পাঠ 'সম্যক্') জ্যোতিপাল, শীর্ষস্নাপনের জন্য আমাদের সুমুকা-নামক পুষ্করিণীতে উপসংক্রান্ত হইলে কেমন হয়?" এইরূপ উক্ত হইলে পর, হে আনন্দ, মাণব জ্যোতিপাল কুম্ভকার ঘটিকারকে এই কথা বলিল—"হে ঘটিকার, তবে আমি বলি—'তুমি সুখী হও—যদি তুমি এই কার্যের জন্য (শীর্ষস্নাপনের) কাল উপস্থিত হইয়াছে এমন মনে কর (অর্থাৎ তোমার অভিপ্রায়-বিষয়ে আমার আপত্তি নাই)"। অনন্তর, হে আনন্দ, কুম্ভকার ঘটিকার শীর্ষস্নাপনের শাটি (বসন) লইয়া মাণব জ্যোতিপালের সহিত স্নানের জন্য সেই পুষ্করিণীর দিকে গেল। অনন্তর, হে আনন্দ, মাণব জ্যোতিপাল শীর্ষস্নাত হইয়া জলের তীরে কেশ সংস্থাপন করিতে করিতে জলের তীরে দণ্ডায়মান হইল। অনন্তর, হে আনন্দ, কুম্ভকার ঘটিকার মাণব জ্যোতিপালকে এই কথা বলিল—"হে সৌম্য (ভদ্র) জ্যোতিপাল, এই ভগবান্ কাশ্যপ এই বনখণ্ডেই আছেন;—হে সৌম্য (ভদ্র) জ্যোতিপাল ভগবান্ কাশ্যপের দর্শন ও পর্যুপাসনের জন্য তাঁহার নিকট আমাদের গেলে কিরূপ হয়?" এইরূপ উক্ত

दर्शनाय पर्युपासनाय। एवमुक्ते ज्योतिपालो माणवो घटिकारं कुम्भका-(३२१)
रमेतदवोचत्। किं मे भणे घटिकार तेहि श्रमणकेहि दर्शनाये उपसंक्रमन्तेहि
पर्युपासनाये। अथ खल्वानन्द घटिकारो कुम्भकारो ज्योतिपालं माणवं कृकाटि-
काया गृह्य एतदवोचत्। अयं सम्यग् ज्योतिपाल भगवां काश्यपो इमस्मिं एव
वनखण्डे किं पुनर्वयं सम्यग् ज्योतिपाल येन भगवा काश्यपो तेनुपसंक्रमेम भगवन्तं
काश्यपं दर्शनायोपसंक्रमन्तं पर्युपासनाय। अथ खल्वानन्द ज्योतिपालो माणवो
घटिकारं कुम्भकारं अपधुनित्वा प्रयाति। तमेनं घटिकारो कुम्भकारो अनु-
जवित्वा प्रवेणिकेशेहि गृहीत्वा एतदवोचत्। अयं सम्यग् ज्योतिपाल भगवा
काश्यपो इमस्मि वनखण्डे विहरति किं पुनर्वयं सम्यक्ज्योतिपालं येन भगवा
काश्यपस्तेनोपसंक्रमेम भगवन्त काश्यपं दर्शनाय पर्युपासनाय। अथ खल्वायु-
ष्मनानन्द ज्योतिपालमाणवस्य एतदभूपि। न खल्वप्रत्ययं वा तं यं मे घटिकारो
कुम्भकारो शीर्षस्नातं मूर्ध्नि केशेषु परामृषति नुदन्तकं हीनाय जात्या समानो।
तेन हि भणे घटिकार सुखी भव यस्य दानि कालं मन्यसे।

अथ खल्वानन्द घटिकारो कुम्भकारो ज्योतिपालेन माणवेन सार्धं येन
भगवा काश्यशो तेनुसंक्रमित्वा भगवतः काश्यपस्य पादौ वन्दित्वा एकान्ते

---

হইলে পব মাণব জ্যোতিপাল কুম্ভকাব ঘটিকাবকে (৩২১) এই কথা বলিল—"হে ঘটিকাব আমি বলি সেই শ্রমণদিগেব নিকট দর্শন ও পর্য্যুপাসনার্থ যাওযাব কি প্রযোজন আছে?" অনন্তব, হে আনন্দ, কুম্ভকাব ঘটিকাব মাণব জ্যোতিপালকে কৃকাটিকা (বা কণ্ঠ, কংধবা) ধবিযা এই কথা বলিল—"হে সৌম্য (ভদ্র) জ্যোতিপাল, এই ভগবান্ কাশ্যপ এই বনখণ্ডে আছেন। হে সৌম্য জ্যোতিপাল আমাদেব পক্ষে তাঁহাব নিকট যাইযা তাঁহাব দর্শন ও পর্য্যুপাসন কবিলে আমাদেব কিরূপ হয?" অনন্তব হে আনন্দ, মাণব জ্যোতিপাল কুম্ভকাব ঘটিকাবকে ধাক্কা দিযা চলিযা গেল। কুম্ভকাব ঘটিকাব তাঁহাব পশ্চাদধাবন কবিযা তাঁহাব বেণীবদ্ধ কেশে ধবিযা এই কথা বলিল—"হে সৌম্য (ভদ্র) জ্যোতিপাল, ভগবান্ কাশ্যপ এই বনখণ্ডেই বিহাব কবিতেছেন; হে সৌম্য জ্যোতিপাল তাঁহাব নিকট যাইযা তাঁহার দর্শন ও পর্য্যুপাসন কবিলে আমাদেব কিরূপ হয?" তৎপব, হে আয়ুষ্মান্ আনন্দ, মাণব জ্যোতিপালেব এইরূপ মনে হইল—"ইহা অকাবণে নহে যে, কুম্ভকাব ঘটিকাব নিজে হীন জাতির লোক হইলেও, শীর্ষস্নাত আমাকে, তাহাব অপসবণেব চেষ্টা কবা সত্ত্বেও, কেশে ধবিযা টানিল।" অতএব সে বলিল—"হে ঘটিকার, আমি বলি—তুমি সুখী হও—যদি তুমি (এই দর্শনকার্যেব জন্য) কাল উপস্থিত হইয়াছে এমন মনে কব (অর্থাৎ কাশ্যপের দর্শনবিষয়ে আমার আর আপত্তি নাই)।"

অনন্তর, হে আনন্দ, কুম্ভকাব ঘটিকার মানব জ্যোতিপালকে সঙ্গে লইয়া যে-দিকে ভগবান্ কাশ্যপ ছিলেন সে-দিকে উপসংক্রান্ত হইয়া ভগবান্ কাশ্যপের পাদবন্দনা

अस्थासि। एकान्तस्थित आनन्द घटिकारो कुम्भकारो भगवन्त काश्यपमेतदवोचत्। अय मे भगवान् ज्योतिपाल माणवो दारकवयस्यो सहपांशुक्रीडनको प्रियो मनापो अजन्यस्य ब्राह्मणस्य पुत्रो, त भगवा ओवदतु अनुशासतु। अथ खल्वानन्द भगवा काश्यपो ज्योतिपाल माणव त्रीहि च शरणगमनेहि पचहि च शिक्षापदेहि समादापये। अथ खल्वानन्द ज्योतिपालो माणवो भगवन्त काश्यपमेतदवोचत्। न तावदह भगवन् सर्वाणि पच शिक्षापदानि समादापयिष्य। अस्ति तात्र मे एको पुरुषो विहेठको रोषको जीविताद् व्यपरोपयितव्यो। एवमुक्ते भगवा ज्योतिपाल माणवमेतदवोचत्। कतमो पुनर्ज्योतिपाल एको पुरुषो विहेठको रोषको जीवि (३२२) ताद् व्यपरोपयितव्यो। एवमुक्ते आनन्द ज्योतिपालो माणवो भगवन्त काश्यपमेतदवोचत्। अय भगव घटिकारो कुम्भकारो यो मे तदा एव शीर्षस्नात मर्ध्नि केशेहि परामृषति। तदाह एवमाह। उपसक्रमेम भगवन्त काश्यप दर्शनायोपसक्रमन्त पर्युपासनाये। अपि च भवा सुखी भवतु घटिकारो कुम्भकारो एषोऽह सर्वाणि एव पच शिक्षापदानि समादियामि। अथ खल्वानन्द भगवा काश्यपो घटिकार कुम्भकार ज्योतिपाल च माणव धार्म्यया

---

করিয়া একপার্শ্বে দণ্ডায়মান রহিল। হে আনন্দ, একান্তে অবস্থিত হইয়া কুম্ভকার ঘটিকার ভগবান্ কাশ্যপকে এই কথা বলিল—"হে ভগবন্ এই মাণব জ্যোতিপাল আমার বাল্যকালের বয়স্য ও আমার ধূলাখেলার সাথী এবং সে আমার নিকট প্রিয় ও চিত্তহারক। সে উচ্চকুলসম্ভূত এক ব্রাহ্মণের পুত্র। আপনি ভগবান্ তাহাকে উপদেশ ও অনুশাসন প্রদান করুন।" তদনন্তর হে আনন্দ, ভগবান্ কাশ্যপ মাণব জ্যোতিপালকে ত্রিশরণ (বুদ্ধ, ধর্ম ও সংঘে আশ্রয়) প্রাপ্তি ও পঞ্চ শিক্ষাপদ (শীলাচরণ) গ্রহণ করাইতে চাহিলেন (অর্থাৎ সেগুলিতে দীক্ষিত করিতে চাহিলেন)। হে আনন্দ, তখন মাণব জ্যোতিপাল ভগবান্ কাশ্যপকে এই কথা বলিল—'হে ভগবন্ এখন আমি সব পাঁচটি শিক্ষাপদের সমাদান বা গ্রহণ করিব না। কারণ এখন আমার অনিষ্টকারী ও রোষবিধানকারী (বা পীড়াদায়ক) একটি পুরুষ আছে যাহাকে আমি জীবন হইতে বিচ্যুত করিতে চাই (বধ করিতে চাই)।" এইরূপ বলা হইলে পরে ভগবান জ্যোতিপালকে এই কথা বলিলেন—"হে জ্যোতিপাল কে সেই একটি হিংসাকারক রোষক পুরুষ যাহাকে তুমি জীবন হইতে (৩২২) বঞ্চিত করিতে চাহ।" এইরূপ বলা হইলে পর হে আনন্দ, মাণব জ্যোতিপাল ভগবান্ কাশ্যপকে এই কথা বলিলেন—এই কুম্ভকার ঘটিকার (সেই পুরুষ) যে তখন শীর্ষস্নাত অবস্থায় আমাকে মাথার কেশ ধরিয়া টানিয়াছে। তখন আমি বলিয়াছিলাম—'ভগবান কাশ্যপের দর্শন ও পর্যুপাসনের জন্য তাঁহার নিকট যাইব'।" (আমি তাহাকে বলিয়াছিলাম—) "আপনি কুম্ভকার ঘটিকার সুখী হউন। এই আমি (এখন সব পাঁচটি শিক্ষাপদ গ্রহণ বা স্বীকার করিতেছি।"। এরপর হে আনন্দ, ভগবান্ কাশ্যপ কুম্ভকার ঘটিকারকে ও মাণব জ্যোতিপালকে ধর্ম-

कथया सदर्शयित्वा समादापयित्वा समुत्तेजयित्वा सम्प्रहर्षयित्वा उद्योज्ययि। अथ खल्वानन्द घटिकारो ज्योतिपालो च माणवो भगवतो काश्यपस्य पादौ शिरसा वन्दित्वा प्रक्रामि।

अथ खल्वानन्द ज्योतिपालमाणवो अचिरप्रक्रान्तो घटिकार कुम्भकार-मेतदवोचत्। त्व पि भणे घटिकार भगवतो काश्यपस्य सम्यग् धर्म देशित-माजानासि यथैव अह। एवमुक्ते आनन्द घटिकारो कुम्भकारो ज्योतिपाल माणवमेतदवोचत्। एवमेत सम्यग् ज्योतिपाल। अह पि भगवतो काश्यपस्य एव सम्यग् धर्म देशितमाजानामि यथैव त्व। एवमुक्ते आनन्द ज्योतिपालो माणवो घटिकार कुम्भकारमेतदुवाच। कस्मात् पुन. त्व घटिकार भगवतो काश्यपस्य सन्तिके न अगारस्यानगारिय प्रव्रजसि। एवमुक्ते आनन्द घटिकारो कुम्भकारो ज्योतिपाल माणवमेतदवोचत्। अस्ति मे सम्यग् ज्योतिपाल माता-पितरौ जीर्णवृद्धौ दुर्बलचक्षू तेपा नास्त्यन्यो उपस्थायको। तेनाह भगवतो काश्यपस्य अन्तिके न अगारस्यानगारिय प्रव्रजामि। अथ खल्वानन्द ज्योति-पालस्य माणवस्य नचिरस्यैव गृहवासे अरतिरुत्पद्येत् प्रव्रज्यायै चित्त नमे।

---

সম্বাঙ্কনী কথাদ্বাবা উপদেশ দিয়া, উদ্বদ্ধ কবিয়া, সমুত্তেজনা দিয়া ও সংপ্রহর্ষিত কবিয়া (ধর্মে) উদ্যোগযুক্ত কবিলেন। পবে, হে আনন্দ, ঘটিকাব ও মাণব জ্যোতিপাল উভয়ে মস্তকদ্বাবা ভগবান্ কাশ্যপেব পাদবন্দনা কবিয়া প্রক্রান্ত হইল বা চলিয়া গেল।

অনন্তব, হে আনন্দ মাণব জ্যোতিপাল অল্পক্ষণ চলিতে থাকিয়া কুম্ভকার ঘটি-কাবকে এই কথা বলিল—"হে ঘটিকাব, আমি বলি—ভগবান্ কাশ্যপেব দেশিত (উপদিষ্ট) ধর্ম তুমিও আমাব ন্যায়ই সম্যক্ বুঝিয়াছ। এইবূপ বলা হইলে পব, হে আনন্দ, কুম্ভকাব ঘটিকাব মাণব জ্যোতিপালকে এই কথা বলিল—'হে সৌম্য (ভদ্র) জ্যোতিপাল, তাহা ঠিক। আমিও ভগবান্ কাশ্যপেব দেশিত ধর্ম তোমাব ন্যায়ই সম্যক্ বুঝিয়াছি। এইবূপ বলা হইলে পব, হে আনন্দ, মাণব জ্যোতিপাল কুম্ভকাব ঘটিকাবকে এই কথা বলিল— হে ঘটিকাব, কি কাবণে তুমি ভগবান্ কাশ্যপেব নিকটেই অগাব (গৃহ) হইতে অনগাবিক (গৃহত্যাগের) অবস্থা লইয়া প্রব্রজ্যা গ্রহণ কব নাই?" এইবূপ বলা হইলে, হে আনন্দ, কুম্ভকাব ঘটিকাব মাণব জ্যোতিপালকে এই কথা বলিল—"হে সৌম্য জ্যোতিপাল, আমার জীর্ণ বৃদ্ধ পিতামাতা আছেন—তাঁহাদেব দৃষ্টিশক্তি দুর্বল এবং তাঁহাদের (আমি ছাড়া) অন্য কোন উপস্থায়ক বা সেবাকাবী কেহ নাই। এই কাবণেই আমি ভগবান্ কাশ্যপেব অন্তিকে অগাব হইতে অনগাবিক অবস্থা লইয়া প্রব্রজ্যা গ্রহণ কবি নাই (অর্থাৎ গৃহত্যাগ কবিয়া সন্ন্যাসী হই নাই)'। তৎপর, হে আনন্দ, অল্পদিনের মধ্যেই মাণব জ্যোতিপালের গৃহবাসবিষয়ে অরতি বা অনন্‌রাগ উৎপন্ন হইল এবং সে প্রব্রজ্যায় মন নমিত কবিল। অনন্তব, হে আনন্দ,

अथ खल्वानन्द ज्योतिपालो माणवो येन घटिकारो तेनुपसक्रमित्वा घटिकार कुम्भकारमेतदवोचत्। एहि सम्यग् घटिकार (३२३) भगवतो काश्यपस्य अन्तिके अनुप्रणिधेमि प्रव्रज्यायै प्रव्रजिष्यामि अगारस्यानगारियं। अथ खल्वानन्द घटिकारो कुम्भकारो ज्योतिपाल माणवमुपादाय येन भगवान् काश्यपो तेनुपसक्रमित्वा भगवत काश्यपस्य पादौ शिरसा वन्दित्वा एकान्ते अस्थासि।

एकमन्ते स्थितो आनन्द घटिकारो कुम्भकारो भगवन्त काश्यपमेतदवोचत्। अय मे भगव ज्योतिपालो माणवो दारकवयस्यको सहपांशुक्रीडनको प्रियो मनापो अजन्यस्य ब्राह्मणस्य पुत्रो। त भगवा प्रव्राजेतु उपसपादेतु च। अथ खल्वानन्द भगवा काश्यपो भिक्षू आमन्त्रेसि। प्रव्राजेथ भिक्षवो ज्योतिपाल माणव उपसपादेथ। अथ खल्वानन्द भिक्षवो ज्योतिपाल माणव प्रव्राजेन्सु। अथ खल्वानन्द भगवान् काश्यपो ज्योतिपालस्मि भिक्षुस्मि अचिरोपसपन्ने कोशलेहि काशीपु चारिका प्रक्रामि।

अथ खल्वानन्द भगवान् काश्यपो काशीपु चारिका चरमाणो महता भिक्षु-सघेन सार्धं सप्तहि भिक्षुसहस्रेहि येन काशीना वाराणसी नगर तदवसारि तदनु-

---

মাণব জ্যোতিপাল যে দিকে ঘটিকার ছিল সে দিকে উপসংক্রান্ত হইয়া কুম্ভকার ঘটিকারকে এই কথা বলিল—'হে সৌম্য ঘটিকার এস (৩২৩) ভগবান্ কাশ্যপের নিকট আমি প্রব্রজ্যার জন্য (নিজের) সংকল্প প্রকাশ করিব এবং অগার হইতে অনগারিক (গৃহত্যাগের) অবস্থা লইয়া প্রব্রজ্যা গ্রহণ করিব"। অনন্তর, হে আনন্দ, কুম্ভকার ঘটিকার মাণব জ্যোতিপালকে লইয়া যে দিকে ভগবান্ কাশ্যপ ছিলেন সে দিকে উপসংক্রান্ত হইয়া মস্তকস্পর্শসহকারে ভগবান্ কাশ্যপের পাদবন্দনা করিয়া একান্তে অবস্থান করিল।

হে আনন্দ, (ভগবানের) একপার্শ্বে দণ্ডায়মান কুম্ভকার ঘটিকার ভগবান্ কাশ্যপকে এই কথা বলিল—"হে ভগবন্ এই মাণব জ্যোতিপাল আমার বাল্যকালের বন্ধু ও আমার ধূলাখেলার সাথী এবং সে আমার নিকট প্রিয় ও চিত্তহারক। সে উচ্চকুলসম্ভূত এক ব্রাহ্মণের পুত্র। ভগবান আপনি তাহাকে প্রব্রজ্যা ও উপসম্পদা বা দীক্ষা প্রদান করুন"। অনন্তর হে আনন্দ, ভগবান কাশ্যপ ভিক্ষুদিগকে ডাকিয়া বলিলেন—"হে ভিক্ষুগণ তোমরা মাণব জ্যোতিপালকে প্রব্রজ্যা ও উপসম্পদা বা দীক্ষা প্রদান কর"। তৎপর, হে আনন্দ ভিক্ষুরা জ্যোতিপালকে প্রব্রজ্যা প্রদান করিলেন। পরে হে আনন্দ জ্যোতিপাল ভিক্ষুরূপে উপসম্পদা বা দীক্ষা প্রাপ্ত হইলে ভগবান্ কাশ্যপ কোশলদেশ হইতে গিয়া কাশীতে চারিকা বা ভ্রমণ করিতে প্রক্রান্ত হইলেন।

অনন্তর, হে আনন্দ ভগবান্ কাশ্যপ কাশীতে চারিকা সম্পাদনার্থ মহান ভিক্ষু-সংঘে সাত শত ভিক্ষু সঙ্গে লইয়া যে দিকে কাশীপ্রদেশের বারাণসী নগর অবস্থিত

प्राप्तः तत्रैव विहरति ऋषिवदने मृगदावे। अश्रोषीत् खल्वानन्द कृकी राजा भगवां किल काश्यपो काशीषु चारिकां चरमाणो महता भिक्षुसंघेन सार्धं सप्तहि भिक्षुसहस्रेहि येन काशीनां वाराणसी नगरं तदवसारि तदनुप्राप्तः तत्रैव विहरति ऋषिवदने मृगदावे। अथ खल्वानन्द कृकी काशिराजा अन्यतरं पुरुषमामन्त्रेसि। एहि त्वं भो पुरुष येन भगवां काश्यपो तेनोपसंक्रमित्वा मम वचनेन भगवन्तं काश्यपं वन्दनं वदेसि। कृकी काशिराजा भगवतो काश्यपस्य पादौ शिरसा वन्दित्वा अल्पाबाधतां च अल्पातंकतां च बलं सुखतां स्पर्शविहारतां च पृच्छति सुवेतनानि च निवेशनं भक्तेन निमन्त्रेति सार्धं भिक्षुसंघेन सचास्य भगवां काश्यपः अधिवासयति। एवमुक्ते आनन्द भगवां काश्यपो तं पुरुषमेतदुवाच। सुखी भवतु कृकी (३२४) काशिराजा सकुमारो सपरिजनो। यस्य दानि कालं मन्यसे। अथ खलु स पुरुषो भगवतो अधिवासनां विदित्वा येन वाराणसी नगरं तेन प्रक्रामि। अथ खल्वानन्द सो पुरुषो येन कृकी काशिराजा तेनुपसंक्रामि। कृकिं काशिराजमिदमवोचत्। उक्तं मे महाराज तव वचनेन भगवतो काश्यपस्य वन्दनं। अल्पाबाधतां अल्पातं-

---

ছিল, সে-দিকে অগ্রসর হইয়া উপস্থিত হইলেন এবং সেখানেই ঋষিবদনে (ঋষিপত্তনে) মৃগদাব-নামক স্থানে বিহার করিতে লাগিলেন। হে আনন্দ, রাজা কৃকী শুনিলেন যে ভগবান্ কাশ্যপ কাশীতে......মৃগদাব-নামক স্থানে বিহার করিতেছেন। তৎপর, হে আনন্দ, কাশিরাজ কৃকী অন্যতর এক পুরুষকে ডাকিয়া বলিলেন—"ওহে পুরুষ, এস যেখানে ভগবান্ কাশ্যপ আছেন সেখানে উপসংক্রান্ত হইয়া আমার বচন বলিয়া ভগবান্ কাশ্যপকে বন্দনা করিয়া বলিও—"কাশিরাজ কৃকী মস্তকদ্বারা ভগবান্ কাশ্যপের পাদবন্দনা করিয়া আপনার অল্পাবাধতা (অর্থাৎ আপনি কোন অল্প আবাধ বা আবাধা বা পীড়াও ভোগ করিতেছেন না তাহা), অল্পাতংকতা বা রোগ-বিহীনতা, আপনার বল বা শক্তি, সৌখ্য ও স্পর্শবিহারতা অর্থাৎ সুখে বা আরামে অবস্থানবিষয়ে জিজ্ঞাসা করিতেছেন এবং তিনি তাঁহার নিজ নিবেশনে বা প্রাসাদে আগামী দিবসে সম্পদ্যমান ভোজনের জন্য ভিক্ষুসংঘ সহ আপনাকে নিমন্ত্রণ করিতেছেন, ভগবান্ কাশ্যপ (আপনি) যদি তাঁহার (এই নিমন্ত্রণ) স্বীকার করেন"। এইরূপ উক্ত হইলে পর, হে আনন্দ, ভগবান্ কাশ্যপ সেই পুরুষকে এই কথা বলিলেন—(৩২৪) "কুমারগণ ও পরিজনসহ কাশিরাজ কৃকী সুখী হউন—যদি তিনি মনে করেন যে (আমাকে নিমন্ত্রণ করার জন্য) তাঁহার এই কাল উপস্থিত হইয়াছে" (অর্থাৎ তিনি এই নিমন্ত্রণ স্বীকার করিয়া কৃকীকে সুখী করিলেন)। অনন্তর, সেই পুরুষ ভগবানের (কাশ্যপের) এই নিমন্ত্রণ-স্বীকার বুঝিয়া যেখানে বারাণসী নগর সেখানে গেলেন। তৎপর, হে আনন্দ, সেই পুরুষ যেখানে কাশীরাজ কৃকী ছিলেন সেখানে গেলেন। (সে) কাশিরাজ কৃকীকে এই কথা বলিল—"হে মহারাজ, আপনার বচনানুসারে আমি ভগবান্ কাশ্যপের বন্দন বলিয়াছি এবং তাঁহার অল্পাবাধতা,

कता च सुख च बल च स्पर्शविहारता च पृच्छितो सुवेतनानि च भक्तेन निमन्त्रितो साधं भिक्षुसघेन। अधिवासेति च भगवा काश्यपो यस्येदानि काल मन्यसे। अथ खल्वानन्द कृकी काशिराजा इमामेव रात्रि प्रभूत प्रणीत खादनीय भोजनीय प्रतिजागरयित्वा तस्या एव रात्रिये अत्ययेनान्यतर पुरुषमामन्त्रेसि। एहि त्व भो पुरुष येन भगवा काश्यपो तेनोपसक्रमित्वा भगवन्त काश्यपमेव वदेहि। समयो भगव कृकिस्य काशिराज्ञो निवेशने भक्ताये यस्य भगव काल मन्यसे। साधु महाराज त्ति सो पुरुषो कृकिस्य काशिराज्ञो प्रतिश्रुत्वा वाराणसीतो नगरातो निर्गम्य येन ऋषिवदनो मृगदावो तेन प्रक्रामि। अथ खल्वानन्द स पुरुषो येन भगवा काश्यपो तेनुपसक्रमित्वा भगवतो काश्यपस्य पादौ शिरसा वन्दित्वा भगवन्त काश्यपमेतदुवाच। समयो भगव कृकिस्य राज्ञो निवेशने भक्ताय यस्य दानि भगव काल मन्यसे। अथ खल्वानन्द भगवा काश्यपो तस्य पुरुषस्य प्रतिश्रुत्वा कालस्यैव निवासयित्वा पात्रचीवरमादाय भिक्षुसघपरिवृतो भिक्षुसघपुरस्कृत येन वाराणसीनगर तेन प्रक्रमते। तेन खलु पुनरानन्द समयेन कृकी काशिराजा कुमारामात्यपरिवृत स्वकस्य निवेशनस्य प्रतिद्वारे अस्यासि भगवन्त काश्यप सश्रावकसघ प्रतिपालयमानो। अद्राक्षीत् खल्वानन्द कृकी काशिराजा

---

অল্পাতঙ্কতা সুখ, বল ও স্পর্শবিহারের বিষয় জিজ্ঞাসা করিয়া তাঁহাকে শ্বস্তন (আগামী দিবসে সম্পাদ্য) ভোজনে ভিক্ষুসংঘ সহ তাঁহাকে নিমন্ত্রণ করিয়াছি। আপনি যে এই কাল নিমন্ত্রণের জন্য নিশ্চিত করিয়াছেন তাহা তিনি স্বীকার করিয়াছেন'। অনন্তর হে আনন্দ, কাশিরাজ কৃকী সেই রাত্রি ব্যাপিয়া জাগিয়া প্রভূত সুন্দর খাদনীয় ও ভোজনীয় দ্রব্য প্রস্তুত করাইয়া সেই রাত্রির অবসান হইলে পর অন্যতর এক পুরুষকে ডাকিয়া বলিলেন—'ওহে পুরুষ, এস তুমি যেখানে ভগবান্ কাশ্যপ আছেন সেখানে উপসংক্রান্ত হইয়া ভগবান কাশ্যপকে বল—হে ভগবন্ যদি আপনি মনে করেন কাল ইহাই—তবে কাশিরাজ কৃকীর প্রাসাদে ভোজনের সময় হইয়াছে'। 'মহারাজ, সাধু' —এই বলিয়া সেই পুরুষ (বা ভৃত্য) কাশিরাজ কৃকীর আদেশ স্বীকার করিয়া লইয়া বারাণসী নগর হইতে নির্গত হইয়া যে দিকে ঋষিপত্তন মৃগদাব সে দিকে চলিলেন। তৎপর হে আনন্দ! সেই পুরুষ যেখানে ভগবান্ কাশ্যপ ছিলেন সেখানে উপসংক্রান্ত হইয়া মস্তকদ্বারা ভগবান্ কাশ্যপের পাদবন্দনা করিয়া ভগবান্ কাশ্যপকে বলিলেন— "হে ভগবন্, আপনি যদি কাল মনে করেন তাহা হইলে রাজা কৃকীর নিবেশনে আহারের সময় উপস্থিত হইয়াছে"। অনন্তর, হে আনন্দ, ভগবান্ কাশ্যপ সেই পুরুষের কথা শুনিয়া স্বীকার করিয়া যথাকালে বস্ত্র পরিধান করিয়া পাত্র ও চীবর লইয়া ভিক্ষুসংঘদ্বারা পরিবৃত ও ভিক্ষুসংঘদ্বারা পুরস্কৃত (অগ্রে রক্ষিত) হইয়া যেখানে বারাণসী নগর সেখানে চলিলেন। হে আনন্দ সেই সময়ে কিন্তু কাশিরাজ কৃকী কুমারগণ ও অমাত্য দ্বারা পরিবৃত হইয়া (বা কুমারামাত্যগণদ্বারা পরিবৃত হইয়া)

भगवन्तं काश्यपं सश्रावकसंघं दूरतो एव आगच्छन्तं। दृष्ट्वा पुनर्येन भगवा काश्यपो सश्रावकसंघो तेनोपसंक्रमित्वा भगवतो काश्यपस्य सश्रावकसंघस्य पादौ शिरसा वन्दित्वा भगवन्तं काश्यपं सश्रावकसंघं पुरस्कृत्वा स्वक(३२५)निवेशन प्रवेशेति।

तेन खलु पुनः समयेन कृकिस्य काशिराज्ञो निवेशने कोकनदो नाम प्रासादो नवो अचिरनिष्ठितो अपरिभुक्तपूर्वो केनचित् श्रमणकेन वा ब्राह्मणेन वा। अथ खल्वानन्द कृकी काशिराजा भगवन्तं काश्यपमेतदवोचत्। अयं मे भगवन्निवेशने कोकनदो नाम प्रासादो नवो अचिरनिष्ठितो अपरिभुक्तपूर्वो केनचिच्छ्रमणेन वा ब्राह्मणेन वा तं भगवा प्रथमं परिभुंजतु। भगवता परिभुक्तं पश्चाद्वयं परिभुंजिष्यामः। एवमुक्ते भगवा काश्यपो कृकिं काशिराजं एतदुवाच। तेन हि महाराज सुखी भव यस्येदानीं कालं मन्यसे। अथ खलु कृकी काशिराजा कोकनदे प्रासादे आसनानि प्रज्ञापयेत् खाद्यभोज्यमभिनामयेत्।

अथ खलु भगवा कोकनद प्रासाद अभिरुहित्वा निषीदे प्रज्ञप्त एव आसने, यथासने च भिक्षुसंघ.। अथ खलु आनन्द कृकी काशिराजा भगवन्तं काश्यपं

---

নিজের নিবেশনের দ্বারদেশে সশ্রাবকসংঘ ভগবান্ কাশ্যপ আসিতেছেন বলিয়া প্রতীক্ষা করিয়া দাঁড়াইয়াছিলেন। হে আনন্দ, কাশিরাজ কৃকী সশ্রাবকসংঘ ভগবান্ কাশ্যপকে দূরেই আসিতেছেন দেখিতে পাইলেন। দেখিয়াই (তিনি) যে-দিকে ভগবান্ কাশ্যপ শ্রাবকসংঘ লইয়া আসিতেছেন সে-দিকে উপসংক্রান্ত হইয়া মস্তকদ্বারা সশ্রাবকসংঘ ভগবান্ কাশ্যপের পাদবন্দনা করিয়া সশ্রাবকসংঘ ভগবান্ কাশ্যপকে অগ্রভাবে রাখিয়া নিজের (৩২৫) নিবেশনে প্রবেশ করিলেন।

সেই সময়ে আবার কাশিরাজ কৃকীর নিবেশনে কোকনদ-নামক এক নূতন প্রাসাদ অচিরনির্মিত ও কোন শ্রমণক বা ব্রাহ্মণদ্বারা অপরিভুক্তপূর্ব ছিল (অর্থাৎ নব নির্মিত প্রাসাদ কোন শ্রমণক বা ব্রাহ্মণ ইতিপূর্বে পরিভোগ করেন নাই)। অনন্তর, হে আনন্দ, কাশিরাজ কৃকী ভগবান্ কাশ্যপকে এই কথা বলিলেন—"হে ভগবন্, আমার এই নিবেশনে বা রাজকুলে কোকনদ-নামক যে নূতন প্রাসাদ অচির-নির্মিত হইয়াছে, তাহা ইতিপূর্বে কোন শ্রমণ বা ব্রাহ্মণ পরিভোগ করেন নাই, ভগবান্ আপনিই ইহা সর্বপ্রথম পরিভোগ বা ব্যবহার করুন। ভগবান্‌দ্বারা পরিভুক্ত হইলে পর ইহা আমরা পরিভোগ করিব'। এইরূপ উক্ত হইলে পর, ভগবান্ কাশ্যপ কাশিরাজ কৃকীকে এই কথা বলিলেন—"তাহা হইলে, হে মহারাজ, আপনি সুখী হউন—যদি মনে করেন ইহা পরিভোগ করার এই-ই সময় (অর্থাৎ আপনার অভিলাষ পূর্ণ হউক)"। অনন্তর কাশিরাজ কৃকী কোকনদ-নামক প্রাসাদে আসনসমূহ রচনা করাইলেন এবং খাদ্য ও ভোজ্য সেখানে আনাইয়া নামাইলেন।

অনন্তর ভগবান্ কোকনদ প্রাসাদে উঠিয়া নির্দিষ্ট আসনে উপবেশন করিলেন এবং ভিক্ষুসংঘ যথানির্দিষ্ট আসনে বসিলেন। তৎপর, হে আনন্দ কাশিরাজ কৃকী

स्वहस्तेनैव खादनीयभोजनीयेन सन्तर्पयेत् संप्रवारयेत्। एकमेकं च सप्तसप्त पुरुषा सप्तसप्तेहि निष्ठानेहि पर्णकुलकेन च शालिना।

अथ खलु कृकी काशिराजा भगवन्तं काश्यपं भुक्ताविं धौतपाणिं अपनीतपात्रं विदित्वा अन्यतरं नीचकमासनमादाय येन भगवां काश्यपो तेनुपसंक्रमित्वा भगवतो काश्यपस्य पादौ शिरसा वन्दित्वा एकान्ते निषीदि। एकान्ते निषण्णो आनन्द कृकी काशिराजा भगवन्तं काश्यपमेतदवोचत्। अधिवासेतु भगवां वाराणसीये नगरे वर्षावासं। अहं भगवं आरामं कारापयिष्यं इमस्मिं च सप्त कूटागारसहस्राणि सप्त च पीठसहस्राणि सप्त च वीथिसहस्राणि सप्त च तुरगसहस्राणि सप्त च आरामिकसहस्राणि उपस्थापयिष्यंति यानि भिक्षुसंघं प्रत्येकंप्रत्येकं उपस्थिहिष्यन्ति। एवंरूपेन उपस्थानेन भगवन्तं च उपस्थिहिष्यंति भिक्षुसंघं च। एवमुक्ते (३२६) आनन्द भगवां काश्यपो कृकिं काशिराजानमेतदवोचत्। न हि महाराज शाक्यं वज्जिषु मे वर्षावासो भविष्यति। द्वितीयं पि तृतीयं पि एवमेव कर्तव्यं। अथ खल्वानन्द कृकी काशिराजा नैवं भगवां काश्यपो अधिवासेति वाराणसीयं नगरे वर्षावासं ति प्रारोदीदश्रुकानि च प्रवर्तयि। अथ

---

ভগবান্ কাশ্যপকে স্বহস্তে খাদনীয় ও ভোজনীয়দ্বারা পরিবেশন করিয়া সন্তোষিত করিলেন। এক এক জনকে (ভিক্ষুকে) সাত সাত জন পুরুষ বা ভৃত্য সাত সাত প্রকার নিষ্ঠান বা ব্যঞ্জন ও পর্ণকুলক-নামক (?) শালিধান্যের ওদনদ্বারা (ভোজনকার্য সম্পাদন করাইল)।

অনন্তর কাশিরাজ কৃকী যখন জানিলেন যে ভগবান্ ভোজন শেষ করিয়া হাত ধুইয়াছেন ও (ভোজন) পাত্র অপনীত করিয়াছেন তখন তিনি একখানি নীচক (ক্ষুদ্র) আসন লইয়া যেখানে ভগবান্ কাশ্যপ ছিলেন সেখানে উপসংক্রান্ত হইয়া মস্তকদ্বারা ভগবান্ কাশ্যপের পাদবন্দনা করিয়া একপার্শ্বে উপবিষ্ট হইলেন। হে আনন্দ, একান্তে নিষণ্ণ কাশিরাজ কৃকী ভগবান্ কাশ্যপকে এই কথা বলিলেন—"হে ভগবন্, বারাণসী নগরে বর্ষাবাসের নিমন্ত্রণ গ্রহণ করুন। হে ভগবন্, আমি এক আরাম (উপবন, বিহার বা আশ্রম) নির্মাণ করাইব এবং ইহাতে সাত সহস্র কূটাগার (উচ্চতলস্থ ঘর), সাত সহস্র পীঠ (বসিবার আসন), ও সাত সহস্র বীথি (বা পথ) নির্মাণ করাইব ও সাত সহস্র অশ্ব (রাখিবার ব্যবস্থা করাইব)। এবং আমি সাত সহস্র আরামিক (আরামের বা বিহারের সেবক) নিযুক্ত করিব যাহারা (প্রত্যেকে ভিক্ষুসংঘের প্রত্যেক ভিক্ষুর সেবাবিধান করিবে। এইপ্রকার উপস্থান বা সেবাকার্যদ্বারা (আমি) ভগবান্ আপনাকে ও ভিক্ষুসংঘকে সেবা করিব। এইরূপ বলা হইলে, (৩২৬) হে আনন্দ, ভগবান্ কাশ্যপ কাশিরাজ কৃকীকে এই কথা বলিলেন—"হে মহারাজ, বজ্জিদের মধ্যে আমার বর্ষাবাস হইবে—ইহা (সম্প্রতি) পারা যাইবে না (অর্থাৎ সেখানে আমার বর্ষাবাস সম্ভবপর হইবে না)"। এই বাক্য (অনুরোধবাক্য ও উত্তরবাক্য) দুইবার তিনবার এইরূপই করা হইয়াছিল। অনন্তর, হে আনন্দ, ভগবান্ কাশ্যপ বারাণসী নগরে বর্ষাবাসের নিমন্ত্রণ

खल्वानन्द कृकी काशिराजा भगवन्तं काश्यपमेतदवोचत्। अस्ति पुनर्भगवतो अन्योऽपि एवंरूपो उपस्थायको यथैवाहं। एवमुक्ते आनन्द भगवां काश्यपो कृकिं राजानमेतदवोचत्। अपरिपूर्णो खलु मे त्वं महाराज उपस्थायको। एवमुक्ते आनन्द कृकी काशिराजा भगवन्तं काश्यपमेतदुवाच। कतमो पुनर्भगवतो मम पूर्णतरो परिपूर्णतरो उपस्थायको। एवमुक्ते आनन्द भगवां काश्यपो कृकिं काशिराजानमेतदवोचत्। अस्ति महाराज तुह्यं एव विजिते वेरुडिङ्गं नाम ब्राह्मणग्रामो। तत्र घटिकारो सो मे उपस्थायको। एवमुक्ते आनन्द कृकी काशिराजा भगवन्तं काश्यपमेतदवोचत्। केवरूपा पुनर्भगवं घटिकारस्य भोगा येहि भगवन्तमुपस्थिहति संघं च। एवमुक्ते आनन्द भगवां काश्यपो कृकिं काशिराजानमेतदवोचत्। घटिकारो महाराज कुम्भकारो यावज्जीवं प्राणातिपातातो प्रतिविरतो यावज्जीवमदत्तादानातो प्रतिविरतो यावज्जीवं अब्रह्मचर्यातो प्रतिविरतो यावज्जीवं मृषावादात् प्रतिविरतो यावज्जीवं सुरामैरेयमद्यप्रमदस्थानातो प्रतिविरतो यावज्जीवं नृत्यगीतवादिता प्रतिविरतो यावज्जीवं गन्धमाल्यवर्णकधारणात् प्रतिविरतो यावज्जीवं उच्चशयना महाशयनात्

---

স্বীকার করিলেন না বলিয়া কাশিরাজ কৃকী অত্যন্ত রোদন করিলেন এবং অশ্রুপাত করিলেন। তৎপর, হে আনন্দ, কাশিরাজ কৃকী ভগবান্ কাশ্যপকে এই কথা বলিলেন—"ভগবান্ (আপনার) সেবার্থ আমার ন্যায় অন্য কেহ এইরূপ উপস্থায়ক বা সেবক আছে কি"? এই কথা বলা হইলে, হে আনন্দ, ভগবান্ কাশ্যপ রাজা কৃকীকে বলিলেন—"হে মহারাজ, তুমি, কিন্তু, আমার অপরিপূর্ণ উপস্থায়ক (সেবক)"। ইহা বলা হইলে, হে আনন্দ, কাশিরাজ কৃকী ভগবান্ কাশ্যপকে এই কথা বলিলেন—"কোন্ ব্যক্তি ভগবান্ (আপনার) সেবার্থ (আমার অপেক্ষায়) পূর্ণতর পরিপূর্ণতর উপস্থায়ক?" এই কথা বলা হইলে, হে আনন্দ, ভগবান্ কাশ্যপ কাশিরাজ কৃকীকে এই কথা বলিলেন—"হে মহারাজ, তোমারই বিজিতে বা রাজ্যে বেরুডিঙ্গ-নামক এক ব্রাহ্মণগ্রাম আছে। সেখানে সেই ঘটিকার-নামক (লোকটি) আমার উপস্থায়ক"। এই কথা বলা হইলে, হে আনন্দ, কাশিরাজ কৃকী ভগবান্ কাশ্যপকে এই কথা বলিলেন—"হে ভগবন্, ঘটিকারের আর কত প্রকারের ভোগদ্রব্য আছে যাহাদ্বারা সে ভগবান্ (আপনার) ও সংঘের উপস্থান বা সেবা করিয়া থাকে"? এইরূপ উক্ত হইলে পর, হে আনন্দ, ভগবান্ কাশ্যপ কাশিরাজ কৃকীকে এই কথা বলিলেন—"হে মহারাজ, ঘটিকার যাবজ্জীবন (১) প্রাণাতিপাত বা প্রাণনাশ বা প্রাণিহিংসা হইতে বিরত, (২) অদত্তাদান (অপ্রদত্ত বস্তুর গ্রহণ অর্থাৎ চুরি) হইতে বিরত, (৩) অব্রহ্মচর্য (স্ত্রীসঙ্গ) হইতে বিরত, (৪) মৃষাবাদ বা মিথ্যাকথন হইতে বিরত, (৫) সুরা, মৈরেয় (উগ্র মাদকদ্রব্যবিশেষ) ও মদ্যরূপ মাদকদ্রব্যের উন্মাদনা হইতে বিরত, (৬) নৃত্য, গীত ও বাদিত্র হইতে বিরত, (৭) গন্ধদ্রব্য, (পুষ্প)মাল্য ও বর্ণক (অঙ্গরাগদ্রব্য)-ধারণ হইতে বিরত,

प्रतिविरतो यावज्जीव विकार(ल)भोजनात् प्रतिविरतो यावज्जीव जातरूपरजनप्रतिग्रहणात् प्रतिविरतो। न खलु महाराज घटिकारो कुम्भकारो साम पृथिवी खनति इति। अथ खलु ये ते भवन्ति मूषोत्किरा वा वारिप्ररोपिता वा (३२७) वारच्छिन्ना वा मृत्तिका ततो मृत्तिकामादाय भाजनानि कृत्वा चतुर्महापथे निक्षिपति। ये तेहि भाजनेहि अर्थिका भवन्ति ते तानि भाजनानि मुद्गप्रभिन्न वा माषप्रभिन्न वा तण्डुलप्रभिन्न वा पूरेत्वा उत्किरित्वा भाजनान्यादाय अनपेक्षा येव प्रक्रमन्ति। एवरूपा महाराज घटिकारस्य कुम्भकारस्य भोगा येहि तथागतश्च उपस्थितो सघश्च। मातापितरौ जीर्णौ च वृद्धौ दुर्बलचक्षू।

एकमिदमहं महाराज समय वेरुडिङ्गे ब्राह्मणग्रामे विहरामि। सोऽहं महाराज कारयमेव निवासयित्वा पात्रचीवरमादाय वेरुडिङ्ग ब्राह्मणग्राम पिण्डाय प्रक्रामि। सोऽहं महाराज वेरुडिङ्गे ब्राह्मणग्रामे सावदान पिण्डाय चरन्तो येन घटिकारस्य कुम्भकारस्य निवेशन तेनोपसक्रमित्वा उद्देशे अस्थासि। तेन खलु पुन समयेन घटिकारो कुम्भकारो स्वकान्निवेशनान्निष्क्रान्तो अभूपि। अथ खलु महाराज

---

(৮) উচ্চ শয়ন বা শয্যা ও মহাশয়ন (উত্তম বা বড় শয্যা) হইতে বিরত, (৯) বিকাল (অসময়কৃত) ভোজন হইতে বিরত, এবং (১০) জাতরূপ বা স্বর্ণ ও রজত (রৌপ্য)—প্রতিগ্রহণ (বা অপরের নিকট হইতে গ্রহণ) হইতে বিরত রহিয়াছে। হে মহারাজ, কুম্ভকার ঘটিকার (প্রাণিনাশভয়ে) স্বয়ং পৃথিবী বা মৃত্তিকা খনন করে না। আবার যে মৃত্তিকা মূষিকদ্বারা উৎকীর্ণ (উৎপাটিত) যাহা জলদ্বারা বাহিত অথবা যাহা (৩২৭) জলদ্বারা উচ্ছিন্ন সেই মৃত্তিকা লইয়া সে ভাজনসমূহ (মাটীর পাত্রসমূহ) প্রস্তুত করিয়া চতুর্মহাপথে (বড় বড় চতুষ্পথে) রাখিয়া দেয়। যাহারা সেই ভাজনের অর্থী হয় তাহারা সেই ভাজনসমূহ প্রভিন্ন বা বিপাটিত মুদ্গ মাষ ও তণ্ডুলদ্বারা পূর্ণ করিয়া ঢালিয়া দিয়া সেই ভাজনগুলি লইয়া অনপেক্ষ অবস্থায় (তাহার অপেক্ষা না রাখিয়া) চলিয়া যায়। হে মহারাজ কুম্ভকার ঘটিকারের এইপ্রকারই ভোগবস্তু আছে, যদ্দ্বারা তথাগত ও সংঘ উপস্থিত বা সেবিত হয়েন। (তাহার) মাতাপিতাও জীর্ণ, বৃদ্ধ ও দুর্বলচক্ষুর্বিশিষ্ট (এখন)।

এক সময়ে হে মহারাজ আমি বেরুডিঙ্গ-নামক ব্রাহ্মণগ্রামে বিহার করিতেছিলাম। হে মহারাজ, একদিন প্রাতঃকালে আমি বস্ত্র পরিধান করিয়া পাত্র ও চীবর লইয়া পিণ্ডার্থ বা ভিক্ষাচরণার্থ বেরুডিঙ্গ-নামক ব্রাহ্মণগ্রামে ঘুরিতে গেলাম। হে মহারাজ, সেই আমি ব্রাহ্মণগ্রাম বেরুডিঙ্গে যথাক্রমে বা যথাপদ্ধতিতে পিণ্ডার্থ বিচরণ করিতে করিতে কুম্ভকার ঘটিকারের নিবেশন বা গৃহের দিকে উপসংক্রান্ত হইয়া (সেই) উদ্দেশে বা স্থানে যাইয়া দাঁড়াইলাম। কিন্তু, সেই সময় কুম্ভকার ঘটিকার নিজ গৃহ হইতে নিষ্ক্রান্ত (বহির্গত) ছিল। হে মহারাজ, তখন

टिकारस्य कुम्भकारस्य मातापितरौ तथागतमेतदवोचत्। निष्क्रान्तो ते भगवं पस्थायको। एगो उपरिकोष्ठके सूपश्च ओदनश्च अतो भगवां परिभुंजतु। सोऽहं महाराज उपरिकोष्ठात् सूपं ओदनं च देवताहि प्रतिग्राहेत्वा परिभुंजित्वा क्रामि। अथ खलु महाराज घटिकारो कुम्भकारो येन स्वकं निवेशनं तेनोप-संक्रमि। अद्राक्षीत् खलु महाराज घटिकारो कुम्भकारो उपरिकोष्ठका सूपं च ओदनं . परिभक्तं दृष्ट्वान पुनर्मातापितरौ एतदवोचत्। केनिमा तात घटिकारस्य उपरिकोष्ठका सूपो च ओदनं च परिभुक्ता। एवमुक्ते महाराज घटिकारस्य कुम्भकारस्य मातापितरौ घटिकारं कुम्भकारमेतदवोचत्। भगवता पुत्र काश्यपेन। अथ खलु महाराज घटिकारस्य कुम्भकारस्य एतदभवत्। लब्धा पुनर्मे सुलब्धा लाभा यस्य मे भगवां काश्यपो यावदेको पि अतिविश्वस्तो। तस्य चैवमर्धमासं प्रीतिसुखं कायं न विजहति सप्ताहं च मातापितृणां जीर्णवृद्धानां दुर्बलचक्षूणां।

(३२८) एकमिदं महाराज समयं तथागतस्य अरण्यकुटिकाये छाद्य-मानाये तृणानि न संभुणन्ति। सोऽहं महाराज भिक्षूणामामन्त्रयेसि। गच्छथ भिक्षवो घटिकारस्य कुम्भकारस्य निवेशनं तृणानि आनेथ। अथ खलु महाराज

---

ঘটিকার কুম্ভকারের পিতা ও মাতা তথাগতকে এই কথা বলিল—হে ভগবান্, আপনার উপস্থায়ক (সেবক, ভক্ত) গৃহে নাই। উপরিকোষ্ঠকে (অর্থাৎ শিরোগৃহে, উপরের কোঠায়) ঐ সূপ (ব্যঞ্জন) ও ওদন (ভাত) আছে; তাহা হইলে ভগবান্ (আপনি) পরিভোগ বা আহার করিতে পারেন। হে মহারাজ, উপরিকোষ্ঠক হইতে সূপ ও ওদন দেবতাদ্বারা নামাইয়া লইয়া তাহা আহার করিয়া চলিয়া গেলাম। তৎপর, হে মহারাজ, কুম্ভকার ঘটিকার নিজ বাসস্থানে উপসংক্রান্ত হইল। হে মহারাজ, কুম্ভকার ঘটিকার দেখিল যে উপরিকোষ্ঠক হইতে (কেহ) ব্যঞ্জন ও ভাত আহার করিয়া ফেলিয়াছে; দেখিয়া (সে) মাতাপিতাকে জিজ্ঞাসা করিল—'হে তাত, কে ঘটিকারের উপরিকোষ্ঠ হইতে লইয়া সূপ ও ওদন পরিভোগ করিয়াছে'? এইরূপ উক্ত হইলে পর, হে মহারাজ, তাহার পিতা মাতা তাহাকে এই কথা বলিল—'হে পুত্র, ভগবান্ কাশ্যপকর্তৃক (ইহা পরিভুক্ত হইয়াছে)। তদনন্তর, হে মহারাজ, ঘটিকারের মনে এই ভাব উদিত হইল—'আমি ফল লাভ করিয়াছি, উত্তমরূপে (তাহা) লাভ করিয়াছি, যে-হেতু ভগবান্ কাশ্যপ একাকী হইয়াও (অর্থাৎ আমার গৃহে অনুপস্থিতি কালেও) আমার প্রতি এতটা বিশ্বাস প্রদর্শন করিয়াছেন'। (এই জন্য) অর্ধমাস পর্যন্ত প্রীতি-সুখরূপবস্তু তাহাকে পরিত্যাগ করে নাই, এবং তাহার জীর্ণ, বৃদ্ধ ও দুর্বলনেত্র পিতামাতারও সপ্তাহ পর্যন্ত সেই প্রীতিসুখ পরিত্যক্ত হইল না।

(৩২৮) হে মহারাজ, অন্য এক সময়ে তথাগতের অরণ্যকুটিকাতে ছাদনজন্য (ছান ঢাকিবার জন্য) তৃণরাজি ছিল না। হে মহারাজ, সেই আমি ভিক্ষুদিগকে ডাকাইলাম (এবং বলিলাম)—'হে ভিক্ষুগণ, 'তোমরা কুম্ভকার ঘটিকারের বাড়ী যাইয়া

ते भिक्षू: येन घटिकारस्य कुम्भकारस्य निवेशनं तेनोपसंक्रमेन्सु:। तेन खलु पुनर्महाराज समयेन घटिकारो कुम्भकारो स्वकातो निवेशनातो निष्क्रान्तो अभूषि। ते तत्र नाद्दशेन्सु तृणानि अद्दशेन्सु नवच्छदनां आवेशनशालां। अथ खलु महाराज ते भिक्षू: येन तथागतो तेनोपसंक्रमित्वा तथागतस्य पादौ शिरसा वन्दित्वा तथागतं च एतदवोचत्। निष्क्रान्तो ते भगवं उपस्थायको नास्ति चात्र कानिचि तृणानि अस्ति चात्र नवच्छदना आवेशनशाला। एवमुक्ते महाराज ता भिक्षूं एतदवोचत् गच्छथ भिक्षवो घटिकारस्य कुम्भकारस्य नवच्छदनां आवेशनशालां उत्तृणीकृत्वा तृणानि आनेथ। अथ खलु महाराज ते भिक्षू येन घटिकारस्य कुम्भकारस्य निवेशनं तेनोपसंक्रमित्वा घटिकारस्य कुम्भकारस्य नवच्छदनामावेशनशालामुत्तृणी करेन्सु। अथ खलु महाराज घटिकारस्य कुम्भकारस्य मातापितरो तां भिक्षूनेतदवोचत्। को एष घटिकारस्य कुम्भकारस्य नवच्छदनामावेशनशालामुत्तृणीकृत्वा तृणानि हरति। एवमुक्ते महाराज ते भिक्षू घटिकारस्य कुम्भकारस्य मातापितरो एतदुवाच। यत्र आयुष्मं भिक्षूणां भगवतो काश्यपस्य च अरण्यकुटिकाये छाद्यमानाये तृणा न संभुणन्ति तत्र एतानि तृणानि नीयन्ति। एवमुक्ते महाराज घटिकारस्य कुम्भकारस्य मातापितरो तां भिक्षूनेतदवोचत्। हरथ हरथ स्वकानि व। अथ खलु

---

তৃণরাজি আন'। তৎপর, হে মহারাজ, সেই ভিক্ষুরা ঘটিকারের গৃহে গেল। সেই সময়ে ঘটিকার স্বগৃহের বাহিরে চলিয়া গিয়াছিল। সেখানে তাহারা (ভিক্ষুরা) তৃণরাজি দেখিতে পাইল না; বরং তাহারা দেখিল যে (তাহাদের) আবেশন-শালাতে (কারখানা ঘরে) (তৃণদ্বারা) নব-ছাদন করা হইয়াছে। হে মহারাজ, তখন সেই ভিক্ষুরা তথাগতের নিকট উপস্থিত হইয়া মস্তকদ্বারা তাঁহার পাদদ্বয় বন্দনা করিয়া তাঁহাকে এই কথা বলিল—'হে ভগবান্, আপনার উপস্থায়ক (ভক্ত সেবক) বাড়ী হইতে নিষ্ক্রান্ত বা বহির্গত আছে এবং সেখানে কোন তৃণরাজিও নাই, তবে তাহাদের আবেশন-শালাটি (কারখানা-ঘরটি) নবচ্ছাদনা ছিল (অর্থাৎ ইহার ছাদে তৃণরাজি বিস্তৃত ছিল)'। এইরূপ উক্ত হইলে পর, হে মহারাজ, (তথাগত) সেই ভিক্ষুদিগকে এইকথা বলিলেন—'হে ভিক্ষুগণ, তোমরা যাও, কুম্ভকার ঘটিকারের নবচ্ছাদনা আবেশনশালাটি হইতে তৃণসমূহ উঠাইয়া লইয়া সেই তৃণরাজি লইয়া আইস'। অনন্তর, হে মহারাজ, সেই ভিক্ষুরা কুম্ভকার ঘটিকারের গৃহে যাইয়া তাহার (তৃণদ্বারা) নবচ্ছাদিত কারখানাঘরের তৃণসমূহ উঠাইয়া লইল। তৎপর, হে মহারাজ, ঘটিকারের পিতামাতা সেই ভিক্ষুদিগকে জিজ্ঞাসা করিল—'কে ঘটিকারের নবচ্ছাদিত আবেশনশালার তৃণসমূহ উঠাইয়া লইয়া তাহা হরণ করিয়াছে'? হে মহারাজ, এইরূপ উক্ত হইলে পর, সেই ভিক্ষুরা তাহার পিতামাতাকে এই কথা বলিল—'যেখানে হে আয়ুষ্মন্, ভগবান্ কাশ্যপের ও ভিক্ষুদিগের অরণ্যকুটিকার ছাদনজন্য তৃণসমূহ যথেষ্টার্থ নাই, সেখানে এই তৃণসমূহ নেওয়া হইতেছে'। হে মহারাজ, এইরূপ বলা হইলে, ঘটিকারের পিতামাতা সেই

तेनोपसंक्रमेसि। अद्राक्षीत् महाराज घटिकारो कुम्भकारो येन स्वकं निवेशनं खलु महाराज घटिकारो कुम्भकारो नवच्छदनामावेशनशालामुत्तृणीकृतां तृणानि हृतानि दृष्ट्वा च पुनर्मातापितरौ एतदवोचत्। केनिमा तात घटिकारस्य (३२९) कुम्भकारस्य नवच्छदना आवेशनशाला उत्तृणीकृता तृणानि हृतानि। एवमुक्ते घटिकारस्य कुम्भकारस्य मातापितरौ घटिकारं कुम्भकारमेतदवोचत्। भगवतो पुत्र काश्यपस्य अरण्यकुटिकाये तृणानि न प्रभवन्ति तत्र एतानि भिक्षुभिस्तृणानि नीतानि। अथ खलु महाराज घटिकारस्य कुम्भकारस्य एतदभवत्। लब्धा मे सुलब्धा लाभा यत् पुनरस्य मे भगवां काश्यपो यावदेको पि अतिविश्वस्तो। तस्य चैकमासं प्रीतिसुखं कायं न विजहे अर्धमासं च अन्धानां मातापितॄणां। न खलु पुनरहं महाराज अभिजानामि घटिकारस्य कुम्भकारस्य इदमेवरूपं दौर्मनस्यप्रतिलाभं यथैव महाराजे न मे भगवां काश्यपो अधिवासेसि वाराणसीये नगरे वर्षावासं ति।

अथ खल्वानन्द कृकिस्य काशिराज्ञो एतदभवत्। लाभा पुनर्मे सुलब्धा यस्य मे एवंरूपो ब्रह्मचारी विजिते प्रतिवसति द्विपादकानि पुण्यक्षेत्राणि। अथ खल्वानन्द कृकी काशिराजा घटिकारस्य कुम्भकारस्य पर्णकुलशालिस्य शत वाहां

---

ভিক্ষুদিগকে বলিল—'নিজের মত মনে করিয়া (তৃণসমূহ) নেও, নেও'। অনন্তর, হে মহারাজ, ঘটিকার স্বনিবেশনে ফিরিয়া আসিল এবং দেখিল তাহার নবচ্ছাদনা আবেশনশালা উত্তৃণীকৃত হইয়াছে এবং তৃণসমূহ হৃত হইয়াছে—ইহা দেখিয়া (সে) পিতামাতাকে জিজ্ঞাসা করিল—'হে তাত, কুম্ভকার ঘটিকারের (৩২৯) নবচ্ছাদনা আবেশনশালার ছাদ হইতে তৃণসমূহ উঠাইয়া নিয়া কে তৃণগুলি লইয়া গিয়াছে'? এইরূপ উক্ত হইলে, ঘটিকারের পিতামাতা এই কথা বলিল—'হে পুত্র, ভগবান্ কাশ্যপের অরণ্যকুটিকা ছাদিত করার জন্য বেশী তৃণ নাই, সেখানে এই তৃণসমূহ ভিক্ষুরা নিয়া গিয়াছে'। তৎপর, হে মহারাজ, ঘটিকারের মনে এই ভাব উদিত হইল —'আমি ফল লাভ করিয়াছি, উত্তমরূপে (তাহা) লাভ করিয়াছি, যে-হেতু ভগবান্ কাশ্যপ একাকীও আমার এতটা অতিবিশ্বস্ত (জন)'। এবং (এইজন্য) একমাস পর্যন্ত তাহার প্রীতিসুখ পরিত্যক্ত হয় নাই এবং তাহার অন্ধ পিতামাতারও অর্ধমাস পর্যন্ত প্রীতিসুখ নষ্ট হয় নাই। হে মহারাজ, আমার, কিন্তু, মনে হয় যে কুম্ভকার ঘটিকারের এতখানি দৌর্মনস্য বা খেদলাভ ঘটে নাই, 'ভগবান্ কাশ্যপ বারাণসী নগরে বর্ষাবাস করিতে স্বীকার করিলেন না' বলিয়া যতখানি খেদলাভ আপনার হইয়াছে।"

অনন্তর হে আনন্দ, কাশিরাজ কৃকীর মনে এই ভাব উদিত হইল—আমার উত্তম ফল লাভ হইলে যে, এইরূপ একজন ব্রহ্মচারী আমার বিজিতে বা রাজ্যে বাস করে—পুণ্যক্ষেত্রসমূহ দ্বিপাদ বা মানুষের মধ্যেই হইয়া থাকে। তৎপর, হে আনন্দ, কাশিরাজ কৃকী কুম্ভকার ঘটিকারের জন্য একশত গাড়ীভরা পর্ণকুলনামক শালিধান্য,

प्रेषयेत् नवोदकं च तैललवणक्वथनं। अथ खल्वानन्द काश्यपो कृकिं काशिराजानं धर्म्यया कथया संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा संप्रहर्षयित्वा उत्थायासनातो प्रक्रामि।

अथ खल्वानन्द भगवां काश्यपो पश्चाद्भक्तं पिण्डपात्रप्रतिक्रान्तो भिक्षुणामामन्त्रेसि। निषीदथ भिक्षवो सन्निपतिय भिक्षवो बन्धथ पर्यंकं एषो हि पर्यङ्कं बन्धामि तावद् न भिन्दामि यावन्न इमेषां सप्तानां भिक्षुसहस्राणामेतेहि एवं आसनेहि निषण्णानां अनुपादायाश्रवेभ्यश्चित्तानि विमुक्तानि। साधु भगवन्निति ते भिक्षु भगवतो काश्यपस्य प्रतिश्रुत्वा सन्निपीदेन्सुः संनिपतेन्सुः बन्धेन्सुः पर्यङ्कं। अथ खल्वानन्द ज्योतिपालस्य भिक्षुस्य एकरहोगतस्य प्रतिसंलीनस्य अयमेवरूपश्चेतसो परिवितर्को (३३०) उत्पद्ये। अहो पुनरहं भवेयमनागतमध्वानं तथागतो अर्हं सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च। सो इमं च लोकमभिज्ञाय सदेवकं लोकं समारकं सब्रह्मक सश्रमणं प्रजां सदेवमनुष्यां इहैव वाराणस्यां ऋषिवदने मृगदावे धर्मचक्रं प्रवर्तेयं द्वादशाकारं अप्रवर्तियं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण

---

নবজল ও তৈল, লবণ ও ক্বাথ বা পক্কনির্যাসদ্রব্য পাঠাইয়া দিলেন। অনন্তর, হে আনন্দ, কাশ্যপ কাশিরাজ কৃকীকে ধর্মকথাদ্বারা উপদেশ দিয়া, উদ্বুদ্ধ করিয়া, সমুত্তেজনা দিয়া ও সংপ্রহর্ষিত করিয়া আসন হইতে উঠিয়া চলিয়া গেলেন।

অনন্তর, হে আনন্দ, ভগবান্ কাশ্যপ পিণ্ডপাত্র লইয়া ফিরিয়া আসিয়া আহারান্তে ভিক্ষুদিগকে আহ্বান করিলেন (এবং বলিলেন)—"হে ভিক্ষুগণ, তোমরা একত্র সম্মিলিত হইয়া উপবেশন কর এবং পর্যঙ্ক বন্ধন কর। এই আমিও পর্যঙ্ক বন্ধন করিতেছি। আমি যতক্ষণ না এই সাত সহস্র ভিক্ষুর চিত্তসমূহ এইসব আসনে বসিয়াই আস্রব বা পাপাসক্তিসমূহ হইতে নির্মূলভাবে (নিশ্চিহ্নভাবে) বিমুক্তি লাভ করে, ততক্ষণ আমিও এই পর্যঙ্কাসন ভঙ্গ করিব না"। "হে ভগবন্, সাধু"—এই বলিয়া সেই ভিক্ষুগণ ভগবান্ কাশ্যপের কথা স্বীকার করিয়া একত্র সম্মিলিত হইয়া উপবেশন করিলেন এবং পর্যঙ্ক বন্ধন করিলেন।

তৎপর, হে আনন্দ, একাকী, বিবিক্তসেবী হইয়া ধ্যানে নিমগ্ন ভিক্ষু জ্যোতিপালের এইরূপ এক বিতর্ক বা চিন্তা চিত্তে (৩৩০) উৎপন্ন হইল—"অহো, আমি কি ভবিষ্যৎ কোন সময়ে তথাগত, অর্হন্, সম্যক্সংবুদ্ধ, বিদ্যা ও আচরণসম্পন্ন সুগত, অনুত্তর (সর্বোত্তম) লোকবিৎ, দমনীয় (বা শিক্ষার্থী) পুরুষগণের সারথিরূপী (চালক বা শিক্ষকরূপী), এবং দেবগণ ও মনুষ্যগণের শাস্তা (ধর্মোপদেষ্টা) হইতে পারিব? দেবলোক, মারলোক, ব্রহ্মলোক, শ্রমণলোক এবং সদেব ও মনুষ্য প্রজাজনসহ এই বর্তমান লোকের (সম্পূর্ণ) অভিজ্ঞান বা সম্যক্পরিচয় লাভ করিয়া, সেই আমি যেন এই বারাণসীতেই ঋষিবদনের মৃগদাবে সেই দ্বাদশাকার ধর্মচক্র প্রবর্তিত

